THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS.

Nos. 65-67.

---

EDITED BY

MAHAMAHOPADHYAYA

GOPI NATH KAVIRAJ, M. A.

---

THE

# TRISTHALI SETU TIRTHENDUSEKHARA & KASI MOKSHAVICHARA

---

Printed by Ali Bukhsh at the Royal Printing Works, Godowlia, Benares City and published under the authority of the Government, United Provinces by the Superintendent, Government Printing, Allahabad.

---

1936.

# त्रिस्थलीसेतुः ( भट्टोजीदीक्षितकृतः ),
# तीर्थेन्दुशेखरः ( नागेशभट्टकृतः ), तथा
# काशीमोक्षविचारः ( सुरेश्वराचार्यकृतः )

वाराणसीस्थराजकीयसंस्कृत महाविद्यालयाध्यापकेन लब्ध-
व्याकरणन्यायाचार्य मीमांसाशिरोमण्याद्युपाधिकेन
शुक्लोपाह्व सूर्यनारायण शर्मणा संशोधिताः ।




# THE TRISTHALI SETU

BY BHATTOJI DIKSHITA.

# THE TIRTHENDUSEKHARA

BY NAGESA BHATTA.

# THE KASI MOKSHA-VICHARA

BY SURESWARACHARYA.



Edited with Introduction
BY
SURYA NARAYAN SUKLA,
NYAYA VYAKARANACHARYA,
Assistant Professor, Govt. Sanskrit College, Benares.





1936.

# त्रिस्थलीसेतुसारसंग्रहस्य भूमिका ।



नाविदितमिदं प्रेक्षावतां यदहरहः सुखप्राप्त्यर्थं यतमानेष्वपि सर्वप्राणिषु येन पथा कस्य चित्सुखप्राप्तिस्तेनैव पथाऽपरस्य दुःख प्राप्तिरिति सुखदुःखोपभोगे अदृष्टमेवैकं निदानमवशिष्यते । तच्चादृष्टं यागतीर्थदर्शनादिजन्यं तत्र च यागोऽर्थसाध्य इति अर्थरहितैरनुष्ठातुमशक्य इति अर्थरहितानां कृते तीर्थदर्शनमेव अदृष्टार्जनाय सुकरं साधनं तच्च कथं कर्तव्यं कानि च तीर्थानि इति पुराणोपपुराणेषु स्फुटं निरूपितमपि पुराणादिग्रन्थानां बृहत्कायत्वात्सर्वैर्दुर्ज्ञेयत्वमिति तैस्तैर्महाभागैस्तीर्थनिबन्धा निबद्धास्तद्यथा—

तीर्थचिन्तामणिः, तीर्थकल्पलता, तीर्थकौमुदी, तीर्थमञ्जरी, रघुनन्दनभट्टाचार्यकृतं तीर्थतत्त्वम् नृसिंहप्रसादान्तर्गतस्तीर्थसारः, वीरमित्रोदयान्तर्गतस्तीर्थप्रकाशः, तीर्थरत्नाकरः, त्रिस्थलीसेतुर्नारायणभट्टप्रणीतः, त्रिस्थलीसेतुसारः कमलाकरभट्टप्रणीतः ।

तेष्वेव निबन्धेषु एकतमोऽयं निबन्धः त्रिस्थलीसेतुसारसंग्रहो-नाम अत्र च काशी प्रयाग गया तीर्थयात्राः साधु निरूपिताः ।

अस्य ग्रन्थस्य निर्माता च सुगृहीतनामधेयो महाराष्ट्रब्राह्मणो भट्टोजिदीक्षितो नाम । तत्प्रणीता ग्रन्थाश्च-वैयाकरणसिद्धान्तकौमुदी, प्रौढमनोरमा, शब्दकौस्तुभः, तन्त्राधिकारनिर्णयः, चतुर्विंशतिमतसंग्रहः, वैयाकरणसिद्धान्तकारिका, त्रिस्थलीसेतुसारसंग्रहः, तत्त्वकौस्तुभः, अद्वैतकौस्तुभः, आचारप्रदीपः, आशौचनिर्णयः आह्निकम्,

कालनिर्णयसंग्रहः, गोत्रप्रवरनिर्णयः, चन्दनधारणविधिः, तत्त्व-विवेकदीपनव्याख्या, तन्त्रसिद्धान्तदीपिका, तर्कामृतं, तिथि-निर्णयः, तिथिनिर्णयसंक्षेपः, तिथिप्रदीपः, दशश्लोकीव्याख्या, धातु-पाठनिर्णयः, प्रायश्चित्तनिर्णयः, भट्टोजिभट्टीयम्, मासनिर्णयः लिङ्गा-नुशासनसूत्रवृत्तिः, श्राद्धकाण्डः, संध्याभाष्यं चेति । तेषु आदिमाः षड् मुद्रिताः सप्तमश्चायमेव भवन्नयनगोचरः अष्टमश्च यन्त्रस्थोऽन्ये च नाममात्रेण श्रुता इह संकीर्तिताः ।

अयं च भट्टोजिदीक्षितः सप्तदशखैष्टशताब्द्यां बभूव पण्डितरा-जजगन्नाथाप्पयदीक्षितयोः समकालिकस्तत्रापि अप्पयदीक्षितात्कनी-यान् पण्डितराजजगन्नाथाच्च वृद्धः इतिप्रसिद्ध इतिहासः ।

अस्य त्रिस्थलीसेतुसारसंग्रहस्य प्रकाशनावसरे एकं सरस्वती भवनस्थमपरं च मदीयमिति पुस्तकद्वयमेवावलम्बनम् । तत्र मदीयं कसंज्ञया सरस्वतीभवनस्थं च खसंज्ञया व्यवहृतम् यत्र च पाठ भेदः स टिप्पण्यामवस्थापित—इति

सूर्यनारायण शुक्लः ।

# त्रिस्थलीसेतुसारसंग्रहस्थविषयानुक्रमणिका ।

---

श्रीहरिः शरणम् ।

श्री भट्टोजिदीक्षित विरचितः

# त्रिस्थलीसेतुसारसंग्रहः ।

साधारणस्तीर्थविधिः प्रथमं सम्यगुच्यते ।
प्रयागादित्रयविधिः पश्चादित्यत्र संग्रहः ॥

अथ अधिकारिनिरूपणम् ।

तत्र—

या याः काश्चित्तीर्थयात्रा मुनीन्द्रैः
कृता प्रयुक्ता अनुमोदिताश्च ।
ता ब्रह्मचारी विधिवत्करोति
सुसंयतो गुरुणा सन्नियुक्तः ॥

इति ब्रह्मपुराणवचनात् गुरुनियुक्तस्यैव ब्रह्मचारिणोधिकारः । गृहस्थस्य तु सपत्नीकस्यैवाधिकारः, ब्रह्मपुराणे कृकलावैश्योपाख्याने—

पूतां पुण्यतमां भार्यां यो वा त्यक्त्वा प्रयाति हि ॥
तस्य पुण्यफलं सर्वं वृथा भवति नान्यथेत्युक्तेः ।

विधुरस्यापि यज्ञाधिकारे 'यथा वा निवृत्तेः' इतिवचनादस्त्यधिकारः। वानप्रस्थस्यापि—

ऋणानि त्रीण्यपाकृत्य कुर्यात्तीर्थस्य सेवनम्
विधाय वृत्तिं भार्यायाःपुत्रेषु विनिधाय चेति कूर्मोक्तेः ॥

संन्यासिनोपि ग्रामैकरात्रवासिनो 'नगरे तीर्थे च पञ्चरात्रं वसन्त' इतिकात्यायनोक्तेर्मुमुक्षुभिस्तीर्थं गतद्विजेन्द्रैः कार्यमितिकाशीखण्डाच्च । क्षत्रियस्य तु नृपस्य ब्राह्मणपुरःसरस्यैवाधिकारः 'सर्वस्वनाशेऽप्यथवा नृपस्तु स ब्राह्मणानग्रत एव कृत्वा' इति ब्रह्मपुराणात् । वैश्यशूद्रयोरपि-

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम ।
न वियोनिं व्रजन्त्येते स्नातास्तीर्थे महात्मनः ॥

इति भारतवचनात् ।

यस्तु मनुः—

जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ।
देवताराधनञ्चेति स्त्रीशूद्रपतनानि षट् ॥

इति तद्विप्रसेवाविरोधेन निरन्तरं तीर्थयात्रादि न कार्यमित्येवंपरम् स्त्रियाश्च भर्तृशुश्रूषात्यागेन तीर्थयात्रानिषेधपरम् । मात्राद्यस्थिक्षेप्तुकामस्य सर्वस्यापि "मातुः पितुः क्षेप्तुमनास्तथे" तिवचनात् । तस्मात्सर्वेषां तीर्थयात्रायामधिकारः ।

अथतीर्थफलतारतम्यकारणानि ।

शंखः—

तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत् ।
स्नानजं फलमाप्नोति तीर्थयात्राकृतं न तु ॥

प्रसङ्गेन-वाणिज्यराजसेवादिप्रसङ्गेन ।

यत्तु पैठीनसिः—

अर्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ।
षोडशांशं तु लभते यः परार्थेन गच्छति ॥

तत्र प्रसङ्गेनोद्देश्यतीर्थान्तरप्रसङ्गेन । परार्थेन वेतनं गृहीत्वेत्यर्थः । प्रभासखण्डे तु परान्नेन गच्छतीतिपाठः । तत्र परान्नं भुञ्जान इत्यर्थः ।

प्रभासखण्डे—

यश्चान्यं कारयेद्भक्त्या तीर्थयात्रां तथेश्वरः ।
[illegible] ॥

विशिष्टनयने त्वष्टगुणम् । तदुक्तं भारते युधिष्ठिरंप्रति 'नेता च त्वमृषीन्यस्मात्तस्मात्तेऽष्टगुणं फलम्' इति ।

अथ यानविशेषकृतं फलतारतम्यम् ।

गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम् ।
नरयाने तदर्धं स्यात् पद्भ्यां तत्स्याच्चतुर्गुणम् ॥

इतिमात्स्यकौर्मयोः ।

चतुर्गुणमित्यत्र कृते चतुर्गुणो धर्म इतिवत् गुणशब्दः पादापरपर्यायचतुर्थांशपरः । तथा च पद्भ्यां गच्छतस्तत्फलं चतुर्गुणं चतुश्चरणं पूर्णमितियावत् । अत्र पद्भ्यामितिनिरुपानत्काभ्यामित्यर्थः ।

तथा च जावालिः—

द्विर्भोजनं तृतीयांशं हरेत्तीर्थफलस्य च ।
यानमर्धं चतुर्थांशं छत्रोपानहमेव च ॥
तस्मादेतैर्विहीनस्तु सर्वं तीर्थफलं लभेदिति ।

अयं च निषेधः शक्तस्य । तथा च कौर्मे—

नरयानं चाश्वतरी हयादिसहितो रथः ।
तीर्थयात्रास्वशक्तानां यानं दोषकरं न हीति ॥

यत्र च नावा विना गमनं न संभवति शङ्खोद्धारगङ्गासागरादौ । यावति च मार्गप्रदेशे नद्याक्रान्ते पद्भ्यां गमनासंभवस्तत्रैव नौकागमनं न दोषाय । तदुक्तं 'नौकायानमयानं स्यात्' इति । येषामप्यङ्गवङ्गादिदेशानां गमनं निषिद्धं तत्रापि तीर्थयात्रोद्देशेन गमने न दोषः ।

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
तीर्थयात्रां विना यातः पुनः संस्कारमर्हति ॥

इतिस्मृतेः ॥

अथकालविचारः ।

यात्राविशेषे गुरुमौढ्यादिकं न दोषाय । तदुक्तम्—

गोदावर्यां गयायां च श्रीशैले ग्रहणद्वये ।
सुरासुरगुरूणां च मौढ्यदोषो न विद्यते ॥

इतिवायुपुराणे ।

गयायां सर्वकालेषु पिण्डं दद्याद्विधानतः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ।
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पताविति ॥

अत्र श्राद्धस्य यात्रापूर्वकत्वात् तीर्थयात्रापि न निषिद्धेत्याहुः ।

अधिमासे च जन्मर्क्षे अस्ते च गुरुशुक्रयोः ।
तीर्थयात्रा न कर्तव्या गयां गोदावरीं विनेति ॥ पाद्मे ।
काशीमुद्दिश्य यातानां सर्वः स्यात्समयः शुभः ॥
मङ्गलं सकलं वस्तु न किंचिद्धि विचारयेदिति ।

अथतीर्थगमनविधिः ।

स्कान्दे—

तीर्थयात्रां चिकीर्षुः प्राग्विधायोपोषणं गृहे ।
गणेशं च पितॄन् विप्रान् बन्धूञ्शक्त्या प्रपूज्य च ॥
कृतपारणको हृष्टो गच्छेन्नियमधृक् पुनः ।
आगत्याभ्यर्च्य च पितॄन् यथोक्तफलभाग्भवेत् ॥

आगत्येतितीर्थयात्रां कृत्वा गृहागतेन पुनः श्राद्धं कार्यमित्यर्थः । श्राद्धं चोपवासोत्तरदिने 'उपोष्य रजनीमेकां प्रातः श्राद्धंविधाय च' इति स्कान्दे शिवशर्मोपाख्यानात् ।

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कार्पटीवेषं कृत्वा ग्रामं प्रदक्षिणम् ॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ।
ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्जितः ॥

इतिविष्णुपुराणवचनात्

श्राद्धानन्तरं कार्पटिकवेषोपि कार्यः । केचित्तु गयामुपक्रम्यैव विधानाद् गयायामेवैषविधिरित्याहुः ॥

प्रयागे तीर्थयात्रायां पितृमातृवियोगतः ।
कचानां वपनं कुर्याद् वृथा न विकचो भवेत् ॥

इति विष्णुपुराणात् उपवासदिने श्राद्धात्पूर्वं मुण्डनमपि कार्यम् । केचित्तु प्रायश्चित्तार्थतीर्थयात्रायामेवेदमित्याहुः । कार्पटिकवेषेण तीर्थगमने तदित्यप्याहुः । श्राद्धं च तीर्थश्राद्धवदेव षड्दैवतं नवदैवतं द्वादशदैवतं(१) वा मतभेदेन पार्वणं कार्यम् । इदं च घृतमात्रद्रव्यकम् 'श्राद्धं कुर्यात्तु सर्पिषा' इति विष्णुपुराणोक्तेः सर्पिषेतितृतीयया निरपेक्षसाधनताबोधनादितिकेचित् । घृतप्रचुरमित्यन्ये । घृतप्रधानद्रव्यकमिति तु स्मृतिरत्नावली मदनपारिजातादयः । कार्पटिकवेषधारणं च गमनकाल एव न तु भोजनादिकालेपीतिकेचित् । भोजनादिकालेपीत्यन्ये ॥

अथ तीर्थयात्रानियमाः ।

भारते—

संप्रस्थितस्तीर्थयात्रां ब्राह्मणानवमन्यते ।
नासौ प्रतिनिवर्तेत जदन्तं तस्य जीवनम् ॥

तथा—

तीर्थं गच्छन् चरेत्संध्यास्तिस्त्र एकत्र मानवः ।
नास्नातो नाशुचिर्गच्छेन्न भुक्त्वा न च सूतकी ॥

अनेन रात्रौ कृतमाध्यान्हिकेन प्रातश्चाकृतनित्यक्रियेण न गन्तव्यमित्युक्तंभवति । अशुचिः-मूत्रं पुरीषं वा कृत्वा ऽकृतशौचः चाण्डालोदक्यादिस्पर्शे स्नानाचमनादिनिमित्ते सति अकृतस्नानाचमनादिश्च ॥

(१) द्वादशदैवतमिति पाठः खपुस्तके नास्ति ।

यत्तु षट्त्रिंशन्मते—

देवयात्राविवाहेषु यज्ञेषु प्रकृतेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न दुष्यतीति ॥

बृहस्पतिश्च—

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यतीति ॥

एतद्यत्राहमनेन स्पृष्ट इतिज्ञानं नास्ति तद्विषयकमिति मदनपारिजातः । अन्ये त्वनिवार्यस्पर्शे देवपूजायात्रादिमात्रकार्ये दोषाभावः भोजनादौ तु स्नानव्यतिरेकेण नैव शुचितेत्याहुः । न च सूतकीति नाशौचवानित्यर्थः । यत्तु प्रारब्धे सूतकंनास्तीति तत्परिगणितव्रतादिमात्रविषयम्—

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकमिति ॥

विष्णुपुराणवचनात् । अतएव

प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रियेति ॥

तावन्मात्रविषय एवारम्भो विष्णुनोक्तोऽग्रिमवाक्ये । अन्येतु यत्र नैरन्तर्येणानुष्ठानं बोधितं मासोपवासादौ तद्विषयमिदम्, न च तीर्थयात्रायां नैरन्तर्येणानुष्ठानम्, तस्मात्प्रारब्धे सूतकाभावो नैतद्विषयः, अतएव सहस्रभोजनादौ सूतकं भवत्येवेत्याहुः । उभथापि यात्रामध्ये सूतके सत्याशौचकालं तत्रैव परिकल्प्य शुद्धौ सत्यां गच्छेदितिसिद्धम् ॥

यत्तु—विवाहदुर्गयज्ञेषु यात्रायांतीर्थकर्मणि, न तत्र सूतकं तद्वत्कर्मयज्ञादिकारयेदिति पैठीनसिवचनम्, तन्मार्गवैषम्यादिना गत्यन्तराभावे सति तीर्थयात्रायामाशौचंनास्तीत्येवंपरम् । अनयैव दिशा रजस्वलास्त्री चत्वारि दिनान्यतिवाह्य पञ्चमेह्नि व्रजेत् 'दैवेकर्मणिपित्र्येच

तीर्थान्तरात्तीर्थान्तरप्राप्तौ स्नानश्राद्धे आवश्यके उपवासक्षौरे तु उद्दे-श्यतीर्थ एवेतिकेचित्।

तीर्थयात्रार्थं चलितो यदि दैवात् परावृत्तस्तदा विशेषो गरुडपुराणे दर्शितः।

तीर्थं चलित्वायः कोऽपि पुनरायाति वै गृहे।
अनुज्ञातः शुभैर्विप्रैः प्रायश्चित्तं समाचरेदिति।

संकल्पबाधनिमित्तमितिभावः। तथाचात्रैव—

यस्तीर्थसन्मुखो भूत्वा व्रजन्ननशने कृते।
चेन्म्रियेदन्तराले तु ऋषीणां मण्डलंव्रजेत् ॥

अनशने मासोपवासादिरूपोपवासव्रते च कृते-इति चकारो-ध्याहार्यः। द्विविधस्याप्यन्तराले मृतस्य ऋषिलोकप्राप्तिर्भवतीत्यर्थः। यदा तु अन्तरा कर्मनाशा नदी पतति तदा तज्जलस्पर्शो यथा न भवति तथा गन्तव्यम्।

कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात्।
गण्डकीबाहुतरणात् पुनः संस्कारमर्हति ॥

इतिवचनात्।

प्राच्यास्तु—

करतोयाजलस्पर्शात्कर्मनाशाविलङ्घनादितिपठन्ति तत्र—
करतोयां कुरङ्गञ्च त्रिरात्रोपोषितो नरः।
अश्वमेधमवाप्नोति विगाह्य प्रयतः शुचिरिति ॥

भारते दानधर्मेषु स्नानश्रवणात्। यात्राकर्तुश्चानृतौ ब्रह्मचर्यम् 'तीर्थानि गच्छता नित्यमनृतौ ब्रह्मचारिणा' इतिस्मृतेः ॥

अथतीर्थप्राप्तिदिनकृत्यम्।

यानानि तु परित्यज्य भाव्यं पादचरैर्नरैः।
स्नहित्वा लोठनीं चैव कृत्वा कार्पटिकाकृतिम् ॥

लोठनीं लुठित्वेति साष्टाङ्गं प्रणम्येत्यर्थः ।

अष्टाङ्गप्रणामस्तु—

पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा तथा ।
मनसा वचसा दृष्ट्या प्रणमोऽष्टाङ्ग उच्यते ॥

कृत्वा कार्पटिकाकृतिमिति यदि यात्राप्रक्रमे कार्पटिकाकृतिर्न कृता तदा प्रवेशदिने कार्येत्यर्थः ।

ततः—

गत्वा स्नानं प्रकुर्वीत वपनं तदनन्तरम् ॥
स्नानं सचैलमाप्लुत्य (कुर्याद्विद्वान्) जलेऽमले।

इतिकाशीखण्डात् ।

अथ तीर्थोपवासः ।

तत्रकाशीखण्डे—

यदह्नि तीर्थप्राप्तिः स्यात्तदहः पूर्ववासरे ।
उपवासः प्रकर्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत् ॥

इति तीर्थप्राप्तिपूर्वदिने उपवासो विहितः । प्रभासखण्डेतु 'उपवासं ततः कुर्यात्तस्मिन्नहनि सुव्रत' इतितीर्थप्राप्तिदिने उपवासो विहितः । तथा—मुण्डनं चोपवासश्चेत्यस्य स्वरूपमात्रविधौ कालद्वयस्योत्पन्नशिष्टस्य तुल्यबलत्वेनाग्निहोत्रे पयोदध्यादिवद्विकल्पः (१) । तत्राद्ये पक्षे प्राप्तिदिने तीर्थश्राद्धशेषभोजनमपि संभवति । द्वितीये तु श्राद्धशेषस्य आघ्राणं कृत्वोपवास एकादश्यादिवत् ॥

(१) पयोदध्यादिवद्विकल्प इति । यथा अग्निहोत्रं जुहोति इति वाक्यविहितमग्निहोत्रमुद्दिश्य पयसा जुहोति दध्ना जुहोति इति वाक्यविहितयोरुत्पन्नशिष्टयोः पयोदधिगुणयोर्विकल्पस्तद्वदित्यर्थः ।

अथ तीर्थे मुण्डनम् ।

देवलः—

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।
वर्जयित्वा कुरुक्षेत्रं विशालं विरजां गयाम् ॥

विरजम्-उत्कलदेशे यत्र धर्मराजेन गयासुरनाभौ विरजाद्रिः स्थापितः वायवीये । दक्षिणदेशस्थलोणारक्षेत्रं विरजमित्यादित्यपुराणे । क्वचित्तु नैमिषं पुष्करं गयामितिपाठः । नचास्य प्रयागे वपनं कुर्यादित्यादि वचनान्तरे विशेषे उपसंहारश्चतुर्धाकरणवदितिवाच्यम् (२) सर्वतीर्थेष्विति सामान्यविधेः सर्वशब्दबहुवचनबलादशेषपरतायाः स्पष्टत्वादुपसंहारासंभवात् यदेव विद्ययेतिवत् । तदुक्तं 'सामान्यविधिरस्पष्टः संह्रियेत विशेषत' इति । इदं च मुण्डनं दशमासानन्तरं पुनस्तीर्थप्राप्तौ कर्तव्यम् ॥

संवत्सरे द्विमासोने पुनस्तीर्थं व्रजेद्यदि ।
मुण्डनं चोपवासश्च ततो यत्नेन कारयेत् ॥

इतिस्मरणात् दशमासोत्तरप्राप्तौ अवश्यं कार्यम् । अन्तरा तु फलेच्छया भवति न तु नियमत इतियत्नेनेत्यस्यार्थः । प्रयागेतु विशेषो वक्ष्यते । मुण्डने संकल्पश्च वपनं कारयिष्य इति । वापनं करिष्ये इति वा । न तु वपनं करिष्य इति । वपनस्य नापितकर्तृकत्वात् । गङ्गां प्राप्य सरिच्छ्रेष्ठां वपनं यो न कारयेदिति वचनस्वरसाच्चेतिकेचित् । बहवस्तु केशवियोगसंविधानरूपस्य वपनस्य स्वकर्तृकत्वे बाधकाभावात् ।

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
केशेषु तानि तिष्ठन्ति तस्मात्केशान्वपाम्यहमिति ॥

---

(२) चतुर्धाकरणवदिति । 'तं चतुर्धा कृत्वा पुरोडाशं बर्हिषद करोति' इति सामान्यवचनम् 'आग्नेयं चतुर्धा करोति' इति विशेषवचनानुरोधेन आग्नेये उपसंह्रियत तद्वदित्यर्थः ।

इति मन्त्रलिङ्गाच्च वपनं करिष्य इत्येव संकल्प इत्याहुः। इदं च वपनं केशश्मश्रुक्रमेण कार्यम्-

गत्वा स्नानं प्रकुर्वीत वपनं तदनन्तरम्।
वपेत्केशांश्च श्मश्रूणि नखानि च निकृन्तयेत्॥

इतिब्रह्मपुराणश्रवणादितिकेचित्।

अन्येतु—एतद्वचनस्य वपनमात्रविधायकत्वात्क्रमस्यापि विधानेन गौरवाद्वाक्यभेदप्रसङ्गाच्च। 'देवा वै यज्ञमकुर्वते' त्यादिना केशप्रथमवपननिन्दापूर्वकश्मश्र्वादिवपनप्रशंसाया आपस्तम्बानां श्रुतौ प्रतीतेश्च श्मश्रुकूर्चयोरादौ वपनमित्याहुः। तत्राप्युदक्संस्थायै दक्षिणश्मश्रु वपनमादौ पित्रादिमृतौ तु दक्षिणसंस्थत्वाद्वामश्मश्रुवपनमादाविति। वपनप्रकारश्चापरार्के—

उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः।
केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेदिति॥

तत्र यतिभिः 'कक्षोपस्थाशिखावर्जमृतुसंधिषु वापयेदिति' ऋतुसंधिष्वेवेति परिसंख्यानात् ऋतुसन्धिव्यतिरिक्तकाले तीर्थप्राप्तावपि न कार्यम्। यतिशिष्टानामाचारोप्येवमेव। आहिताग्निभिस्तु पर्वव्यतिरिक्तकालेऽपि तीर्थनिमित्तकं मुण्डनं कार्यम्। एतस्य नैमित्तिकतया पित्रादिमरणनिमित्तकमुण्डनवत् पर्वनियमाभावादाचाराच्च जीवत्पितृकेणापि तीर्थे मुण्डनं कार्यम्-

विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना।
यो वापयति लोमानि स पुत्रः पितृघातकः॥ इतिवचनात्।

तत्रापि तीर्थान्तरे आद्ययात्रायामेव प्रयागे तु प्रतियात्रमित्याहुः।
[illegible] दर्शितः।

रव्यारसौरिवारेषु रात्रौ पाते व्रताहनि ।
श्राद्धाहः प्रतिपद्रिक्ता भद्राः शौरेषु वर्जयेत् ।

आरो भौमः । शौरिः शनिः । पातो व्यतिपातः । रिक्ताश्चतुर्थी नवमीचतुर्दश्यः । भद्राः द्वितीयासप्तमीद्वादश्यः ।

गार्ग्यः—

षष्ठ्यमापूर्णिमापातचतुर्दश्यष्टमी तथा ॥
आसु संनिहितं पापं त्रिषु तैले भगे क्षुरे ।

व्यासः—

नक्षत्रेण न कुर्वीत यस्मिन् जातो भवेन्नरः ।
न प्रोष्ठपदयोः कार्यं नैवाग्नेये च भारत ।
दारुणेषु तु सर्वेषु प्रत्यरौ च विवर्जयेत् ।
कुम्भे कर्कटके चैव कन्यायां कार्मुके रवौ ।
रोमखण्डं गृहस्थस्य पितॄन्प्राशयते यमः ।
विवाहमौञ्जीचूडासु वर्षमर्धं तदर्धकम् ।
अन्तर्वत्न्यां च जायायां नेष्यते केशावापनमित्यादि ॥

अथ तीर्थस्नानम् ।

तच्च यत्र स्थलविशेषे विपरीतप्रवाहादि तत्र न कार्यं तदुक्तं 'प्रत्यावृतोदके स्नानं वर्ज्यं नद्यां द्विजातिभिः' इति । अस्य गङ्गायामपवादः—

प्रतिस्रोतो रजोयोगोरथ्याजलनिवेशनम् ।
गङ्गायां न प्रदुष्यन्ति सा हि धर्मद्रवा स्वयम् ॥

निषेधान्तरमपि—

शाल्मली तिन्तिणी निम्बकरञ्जाश्च हरीतकी ।
कोविदारकपित्थार्कवदर्यैरण्डशिग्रवः ॥

शाल्मूरः खदिरश्चैषां स्नानं छायासु वर्जयेत् ॥

बदरी च विभीतकीति पाठान्तरम् ।

यश्चरात्रिसंध्यासु निषेधः सोऽप्याकस्मिकतीर्थप्राप्तौ न प्रवर्तते । तदाह वृद्धयाज्ञवल्क्यः—

ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यत इति ॥

एतच्चाद्यान्त्यप्रहरद्वयविषयम् । 'महानिशा तु विज्ञेया मध्यस्थ-प्रहरद्वयम् । प्रदोषपश्चिमौ यामौ दिनवत्स्नानमाचरेत्' इतिपराशरोक्ते-रिति केचित् । परार्थस्नाने विशेषो मार्कण्डेयपुराणे—

मातरं पितरं जायां भ्रातरं सुहृदं गुरुम् ।
यमुद्दिश्य निमज्जेत अष्टमांशं लभेत सः ॥

स्मृतिदर्पणे—दशमांशं लभेत स इति पाठः ।

पैठीनसिः—

प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ॥
मज्जयेच्च यमुद्दिश्य सोऽष्टभागं फलं लभेत् । तत्रमन्त्रः—
कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः पुरा ।
त्वयि स्नाते स च स्नातो यस्येदं ग्रन्थिबन्धनमिति ॥

कुशप्रकृतिः—कुशप्रतिमैव कार्येत्येके । ग्रन्थिबन्धनमिति मन्त्र-लिङ्गात् तन्नाम्ना ग्रन्थिबन्धनमात्रं प्रतिकृतिरित्यपरे । इदं परार्थस्नानं प्रतिकृतिस्नानं च जीवतामेवोद्देशेन कार्यम् । मृतानां तु तर्पण

प्रवाहाभिमुखो मज्जेद्यत्रापः प्रवहन्ति वै।
स्थावरेषु च सर्वेषु आदित्याभिमुखस्तथेति।

स्नानमन्त्रश्च—प्रभासखण्डे—

ॐनमो देवदेवाय शितिकण्ठाय दण्डिने।
रुद्राय चापहस्ताय चक्रिणे वेधसे नमः॥
सरस्वती च गायत्री वेदमाता गरीयसी।
सन्निधात्री भवत्वत्र तीर्थे पापप्रणाशिनी॥
सर्वेषामेव तीर्थानामयं मन्त्र उदाहृतः।
इत्युच्चार्य नमस्कृत्वा स्नानं कुर्याद्यथाविधि॥

अत्र-इत्युच्चार्य नमस्कृत्वेत्युक्तेरयं मन्त्रो न स्नाने करणं किन्तु प्रार्थनामात्रे। स्नानकरणत्वे च मन्त्रलिङ्गबाधः स्यात्। यद्वा अयं मन्त्रः—

सागरस्वननिर्घोष दण्डहस्तासुरान्तक।
जगत्स्रष्टर्जगन्मर्दिन्नमामि त्वां सुरेश्वर।
तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि॥
इदं मन्त्रं समुच्चार्य तीर्थे स्नानं समाचरेत्।
अन्यथा तत्फलस्यार्धं तीर्थेशो हरति ध्रुवम्॥

अनयोश्च मन्त्रयोः प्रार्थनाख्यकार्यैकत्वाद्विकल्पः॥

इति स्नानविधिः॥

अथ तर्पणम्—

तच्चादौ स्वशाखानुसारेण स्नानाङ्गं कृत्वा पश्चात्तथैव देवर्षितर्पणं कृत्वा श्राद्धात्प्रागेव पितृतर्पणमपि कार्यम्। तत्र तर्पणक्रमः—

आदौ पिता ततो माता सापत्नजननी तथा।
मातामहाःसपत्नीका आत्मपत्नी ततः परम्॥

सुतभ्रातृपितृव्याश्च मातुलाश्च सपत्निकाः ॥
दुहिता च स्वसा प्रोक्ता दौहित्रो भागिनेयकः ।
पितृष्वसा मातृष्वसा श्वश्रूश्च श्वशुरो गुरुः ॥
रिक्थदो.................................................. ।
एते स्युः पितरस्तीर्थे तर्पणे च महालये ।

पितेति पित्रादित्रयमित्यर्थः । एवं मातेत्यत्रापि । एवं सर्वान् पितॄन् संतर्प्य एकतिलाञ्जलिं(१)सर्वेभ्यो दद्यात् । तत्रमन्त्रो वायवीयः—

आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥

पूर्वोक्तसकलतर्पणाशक्तौ ब्रह्मेत्यादिनैव श्लोकद्वयात्मकेन मन्त्रेण सतिलकुशांस्त्रीनञ्जलीन्दद्यात् । अत्र प्रत्यञ्जलि मन्त्रावृत्तिः संध्यार्घ्यवदित्येके । अन्येतु ब्रुवन्निति शतृप्रत्ययेन समानकालतावगमात् युवा सुवासा इतिवत्क्रियमाणानुवादितया करणत्वाभावात्सकृदेव मन्त्रं पठन्नञ्जलिं दद्यादित्याहुः । यश्च तर्पणे तिलनिषेधः—

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥

इतिमरीचिः ॥

सप्तम्यां रविवारे च गृहे जन्मदिने तथा ।
भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥
पक्षयोरुभयो रात्रौ सप्तम्यां निशि संध्ययोः ।
विद्यापुत्रकलत्रार्थी तिलान् सप्तसु वर्जयेत् ॥

इतिस्मृत्यर्थसारे ॥

---

(१) एकाञ्जलिम् इति क पाठः ।

विवाहे चोपनयने चौले सति यथाक्रमम् ।
वर्षमर्धं तदर्धं च नेत्येके तिलतर्पणमिति ॥
वृद्धौ सत्यां च तन्मासि नेत्याहुस्तिलतर्पणमिति ।

अयं तीर्थतर्पणे न प्रवर्तते—

तीर्थे तिथिप्रवेशे (१) च गयायां प्रेतपक्षके ॥
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितमितिवचनात् ।

विधवयापि तीर्थे तर्पणं कार्यम् ।

तर्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः ॥
तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकमिति स्कान्दोक्तेः ।

तीर्थे नैमित्तिकतया सुतरां तदधिकारात् ।

इदं च पुत्रपौत्राभावविषयकमिति मदनपारिजातकारादयः । संन्यासिना तु तर्पणं न कार्यम् । 'न कुर्यात्सूतकं भिक्षुः श्राद्धपिण्डोदकक्रियाम्' इतिस्मृतेः ॥

अथनदीनां रजोदोषः—

व्याघ्रपादः—

सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगा इति ।

भविष्योत्तरे ।

आदौ तु कर्कटे देवि महानद्यो रजस्वलाः ॥
त्रिदिनं तु चतुर्थेऽह्नि शुद्धाःस्युर्जाह्नवी यथा ॥

महानद्यश्च ब्रह्मपुराणे—

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ॥
भागीरथी नर्मदा च यमुना च सरस्वती ।

---

( १ ) तिथिविशेषे इतिकपाठः ।

विशोका च वितस्ता च विन्ध्यस्योत्तरतःस्थिताः ।
द्वादशैता महानद्यो देवर्षिक्षेत्रसम्भवाः ॥ इति ॥

इत्यल्पनदीषु अगस्त्योदयावधि रजस्वलात्वमुक्तं मात्स्ये—

यावन्नोदेति भगवान् दक्षिणाशाविभूषणम् ।
तावद्रजोवहा नद्यः करतोयाः प्रकीर्तिताः ॥

करतोयाः स्वल्पतोयाः ॥

गङ्गाविषये देवलः—
गङ्गा च यमुना चैव ···क्षजाता सरस्वती ॥
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञिताः ।
शोणसिन्धुहिरण्याख्याः कोकलोहितघर्घराः ॥
शतद्रुश्च नदाः सप्त पावनाः परिकीर्तिताः ।

अयं रजोदोषस्तीरवासिनां नास्ति । तदुक्तं निगमे—"न तु तत्तीरवासिनामिति" ।

योगियाज्ञवल्क्यः—

अजा गौर्महिषी चैव ब्राह्मणी च प्रसूतिका ।
भूमेर्नवोदकं चैव दशरात्रेण शुद्धयति ॥ इति ।

नूतनखानितकूपाद्युदकं नवोदकम् । वसिष्ठः—
उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ॥
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ।

अथतीर्थश्राद्धम् ।

ब्रह्मपुराणे—

परकीयगृहे यस्तु स्वान्पितॄंस्तर्पयेज्जनः ।
तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ॥
अन्नभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवताम् ।

अत्र परगृहादयो निषिद्धाः न तु तीर्थादयः तेषामस्वामिकत्वात्।

तदुक्तं कौर्मे—

वनानि गिरयो नद्यस्तीर्थान्यायतनानि च॥

देवखाताश्च गर्ताश्च न स्वामी तेषु विद्यते।

गर्ताः—अकृत्रिमक्षेत्रविशेषाः ब्रह्मयोन्यादयः॥

भारते—

भुक्तो वाप्यथवा भुक्तो रात्रावहनि खेचर।

न कालनियमो ह्यस्ति गङ्गां प्राप्य सरिद्वराम्॥

इति तीर्थे कालविशेषानादर उक्तः—'पर्वकालेऽथवाकाले शुचि वाप्यथवाशुचिः' अशुचिराशौचयुक्तोऽपि। तथा च पैठीनसिः—

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि।

न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेदिति॥

इदं चामहेमश्राद्धविषयम्। अन्नश्राद्धं तु रात्रिसंध्ययोर्भुक्तवतश्च तीर्थप्राप्तौ द्वितीयदिने आशौचे तु तीर्थप्राप्तावाशौचापगमे मलमासे तीर्थप्राप्तौ तदा श्राद्धं कृत्वा शुद्धमासे पुनः कार्यम्—

यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम्।

मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेपि चेति॥

स्मृतिचन्द्रिकालिखितवचनात्। अत्रापरपक्षिकं प्रतिमासं कृष्णपक्षश्राद्धम् न तु महालयश्राद्धं तस्य तत्र निषेधात्। स्कान्दे—

न परीक्ष्यो द्विजस्तीर्थे ह्यन्नार्थी भोज्य एव तु॥

एतच्च श्राद्धार्हब्राह्मणालाभे वेदितव्यम्। तत्रापि गुणैर्न परीक्षेत। पातित्याद्यत्यन्तदोषयुक्तस्तु परिहर्तव्य एवेति स्मृतिरत्नावलीकारः।

अथतीर्थश्राद्धे निषिद्धानि ।

देवीपुराणे—

श्राद्धं च तत्र कर्तव्यमर्घ्यावाहनवर्जितमिति ।

तथा—

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ।
तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥
नावाहनं न दिग्बन्धो न दोषो दृष्टिसंभवः ।
सकारुण्यं च कर्तव्यं तीर्थश्राद्धं विचक्षणैः ॥

भविष्ये—

आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते ॥ इति ॥

अग्नौकरणम् तीर्थश्राद्धे न कार्यमिति स्मृतिरत्नावल्याम् । अयं चार्घ्यादिनिषेधस्तीर्थप्राप्तिनिमित्तक एव । श्राद्धे च तदधिकरणकश्राद्धमात्रे क्षयाहादावपि ।

अयनद्वितये श्राद्धं विषुवद्वितये तथा ॥
संक्रान्तिषु च कर्तव्यं पिण्डनिर्वपणादृते ॥

इतिसंक्रन्त्यादिनिमित्तक एव पिण्डनिषेधो न तु वार्षिके तद्वत् । तदुक्तम् । नत्वत्रान्यनिमित्तके पितृयज्ञे पिण्डप्रहाणंभवेदिति ।

विष्णुः—

मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितमिति ॥

ऊहे न्यायश्च भट्टैरुक्तः ॥

मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादिभिः ।
प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः ॥

विकारेष्वनिषिद्धोहाः कार्यापन्नेषु पञ्चधा ।

अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति ते इति ॥

पञ्चधा कार्यापत्तिस्तु—

प्रत्यक्षविधिना भावे विधानेन विकारतः ।

स्वशब्दाच्च निषेधानुवादात्तत्कार्यकारिता ॥ इति ।

एवं च पितॄन्हविषा इत्यत्र पितृशब्दस्य समवेतार्थत्वादर्थान्तरे प्रयोगाभावान्नोहः । पितृशब्दो हि द्व्यर्थः । जनकवाची, सपिण्डीकरणान्तश्राद्धजनितपितृभवोपाधिना स्त्रीपुंससाधारणश्च । प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु इतिविष्णुस्मृतेः । शुन्धन्तां पितरइत्यत्रन्यायादूहः । अत्र हि पूर्वोक्तोपाधिना पितृपदप्रवृत्तौ शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहाः इति मन्त्रद्वयभागो ऽनर्थकः स्यात् । अतोजनकत्वोपाधिनैव प्रवृत्तिः । तेन विकृतौ मातामहादिश्राद्धे "अर्थान्तरत्वादूहः"। सोपि प्रतिपदिकमात्रस्यैव बहुवचनं तु प्रकृतावेकस्मिन्नपि पितर्यसमवेतार्थमिति नोह्यम् । ततश्च शुन्धन्तां मातरः शुन्धन्तां मातामह्यः इत्याद्यूह्यम् । एवं पितामहादावपि । शेषाणां मन्त्रवर्जितमितिविष्णुवचनस्यायमर्थः । शेषाणामिति कर्तरि षष्ठी । ततश्च वर्णशेषाणां शूद्राणाम् । तत्तुल्यानामनुपनीतानां स्त्रीणां कर्तव्यं श्राद्धं तैरमन्त्रकं कार्यमित्यर्थः ।

बाराहपुराणे—

अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः ।

अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥

गृह्यते संबध्यत इत्यर्थः ।

अस्याश्च परिभाषात्वेन प्रकरणानियम्यतया शूद्रस्य स्नानदानादावपि विप्रेण मन्त्रः पठनीय इतिशूलपाणिः । अत्रामन्त्रकमितिवैदि-

कमन्त्रस्यैव प्रतिषेधः। तीर्थश्राद्धे च विश्वेदेवा धुरिलोचनौ यदा काम्यप्रयोगः। नित्यप्रयोगे तु पुरुरवोमाद्रवसावेवेति ॥

अथान्नहेमश्राद्धविचारः ।

सुमन्तुः—

तीर्थे श्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः।
आमान्नेन हिरण्येन कन्दमूलफलैरपीति ॥

अत्रान्नश्राद्धं मुख्यमुत्तरोत्तरं त्वनुकल्प इति मदनपारिजातादिवोदासादयः । स्मृतिरत्नावलीकारादयस्तु ग्रहणे तीर्थश्राद्धौ चामश्राद्धं हेमश्राद्धं वा मुख्यम्। सदैव हि जलान्तेषु आमश्राद्धं प्रचक्षत इतिवचनात् पाकश्राद्धं न भवत्येवेत्याहुः। अन्ये तु तीर्थजलसमीपे चेदामेन हेम्ना वा जलान्तेष्वित्युक्तेः। गृहे त्वन्नेनैव पक्वान्नेन विशेषत इति वचनादित्याहुः। शूद्रेण त्वामेनैव सदा कार्यम्। 'सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधा' इति सुमन्तूक्तेः। आमश्राद्धे च विशेषः स्मर्यते।

आमं ददाति चेद्राजन्नन्नात्तद्द्विगुणं भवेत्।
त्रिगुणं चतुर्गुणंचापि नत्वेकगुणमर्पयेत् ॥

अन्नात्पुरुषाहारादित्यर्थः। अत्रोत्तरोत्तरपक्षो मुख्यः। हिरण्यं त्वष्टगुणं चतुर्गुणं द्विगुणं वा। अशक्तौ तु सममप्यामं हेमं वा देयम्।

उशनाः—

आमश्राद्धं यदा कुर्याद्विधितः श्राद्धतस्तथा।
हस्तेग्नौकरणं कुर्याद्ब्राह्मणस्य विधानतः ॥

तथा—

दद्याद्यद्द्विजातिभ्यः शृतं वाऽशृतमेव वा।
तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत् ॥

षट्त्रिंशन्मते ॥

आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत्।
गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा॥

पिण्डदानं भवतीति शेषः। आमगृहपाकसक्तुपायसानां विकल्पः। आमश्राद्धे च भोजनसंबद्धापोशनाद्यो लुप्तप्रयोजना निवर्तन्ते॥ कृष्णलेवघात(१)वत्। तदुक्तम्—

तृप्तिप्रश्नोऽवगाहश्च जुषप्रशनो यथासुखम्।
आमश्राद्धे भवेन्नैतदापोशानं च पञ्चमम्॥

अवगाहोऽङ्गुष्ठनिवेशनम्। हेमश्राद्धे पिण्डनिवृत्तिरिति दिवोदासः। स्मृत्यर्थसारे तु विकल्पः आमश्राद्धे केषांचिन्मन्त्राणामूहोऽपि भवति-तथा च मरीचिः-

आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने।
अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृतः॥

आवाहने पितॄन्हविषे अत्तवे इति मन्त्रे 'अत्तवे' इति पदस्थाने स्वीकर्तव्य इति पदोहः। स्वधाकारे नमो वः पितर इषे इतिपदे आप्राय्येति पदोहः कार्यः। विसर्जने 'वाजे वाजे' इतिमन्त्रे तृप्ता यातेत्यत्र तृप्ता इति तृप्तिप्रश्नस्थाने तृप्यतेति पदोहः। यद्यपि यूप इति वा एतदक्षरं यदेनमभ्यूहतीतितत्रोहो निषिद्धस्तथापि वचनादूहः। यदा ब्राह्मणा वहवो न लभ्यन्ते तदैकेनापि श्राद्धं कार्यम्—

अन्नाभावे द्विजाभावे तीर्थरूपे महालये।
एकस्मिन्दीयते चान्नमर्घ्यान् पिण्डान पृथक् पृथग्॥

---

(१) 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति काचिद्विकृतिरूपेष्टिः श्रूयते कृष्णलशब्दः सुवर्णशकलवाची तत्र प्रकृतौ 'व्रीहीनवहन्ति' इत्यवघातस्य विहिततया प्रकृतिवद्विकृतिः कर्तव्येतिवचनबलात् चरुहेतौ कृष्णले प्राप्तोऽप्यवघातः वितुषीकरणरूपस्य प्रयोजनस्य लोपान्निवर्तते।

इति वचनात् यदा एकोऽपि न लभ्यते तदा दर्भचयोपरि श्राद्धं कार्यम् ।

पात्राभावे खिलं कृत्वा पितृयज्ञविधिं नरः ।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ।
सत्त्राभावे क्षिपेद्वह्नौ गवे दद्यादथाप्सु वेति देवलोक्तेः ॥

प्रैषानुप्रैषसंयुक्तमिति श्राद्धं सपन्नमिति प्रश्नप्रतिवचने स्वयमेव वदेदित्यर्थः। आमहेमपक्षयोस्तु श्राद्धं निर्वर्त्य कालान्तरे ब्राह्मणाय तद्द्रव्यं दद्यात् । यस्तु श्राद्धे अशक्तः स पिण्डदानमात्रं कुर्यात् ॥ तथाह-देवलः पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोरिति । पिण्डद्रव्याणि देवीपुराणे—

सक्तुभिः पिण्डदानं च संयावैः पायसेन वा ।
कर्तव्यमृषिभिः प्रोक्तं पिण्याकेनेङ्गुदेन वा ॥

गुडेन वेति पाठान्तरम् । संयावो गोधूमविकारः । पिण्याकस्तिलकल्कः ॥ इङ्गुदं तापसतरुफलम् । अत्र पूर्वपूर्वालाभे उत्तरोत्तरं ग्राह्यमित्याहुः पिण्डप्रदानमाहांगिराः—

कपित्थबिल्वमात्रान्वा पिडान्दद्याद्विधानतः ।
कुक्कुटाण्डप्रमाणान्वा केषां चामलकैः समान् ॥
बदरेण समान्वापि दद्याच्छ्रद्धासमन्वितः ।

तीर्थश्राद्धे च पिण्डानां जले प्रक्षेप एवप्रति पत्तिः 'तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः' इतिवचनात् पिण्डदाने ऽप्यशक्तस्तु तिलतर्पणमात्रं कुर्यात् । 'तिलैः सप्ताष्टभिर्वापि समवेतं जलाञ्जलिमि'ति वचनात् । तदयं सक्षेपः । शक्तेन तर्पणश्राद्धपिण्डदानानि त्रीण्यपि कार्याणि । अशक्तेन तर्पणपिण्डौ । अशक्ततरेण तर्पणमात्रमिति । कात्यायनः—

द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमादिति ॥

तथाचैकस्मिन्नपि दिने क्रमेण एकतीर्थप्राप्तौ बहूनि श्राद्धानि कार्याणि दर्शे उपरागश्राद्धवत्।

यत्तु 'नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित्' इति प्रचेतोवचनं तत्समानतिथिकश्राद्धविषयं संक्रान्त्यमावास्यादिनिमित्तकश्राद्धानां तु देशाद्यैक्येनागृह्यमाणविशेषत्वात्तन्त्रेणानुष्ठानम्। यदि तु तीर्थप्राप्तिदिने वार्षिकं स्यात्तदा पृथगेव कार्यम्। तदुक्तं कालादर्शे—

प्रत्याब्दिकेषु चालभ्ययोगेषु विहितस्य च।
संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत्॥ इति।

तत्राप्यादौ तीर्थश्राद्धं पश्चाद्वार्षिकमिति विवेकः। इदं च तीर्थश्राद्धं दशमासानन्तरं तीर्थप्राप्तावावश्यकम्। अन्तरा तु फलेच्छया कृताकृते संवत्सरे द्विमासोने इतिप्रागुदाहृतवचने चकारेण तीर्थश्राद्धस्यापि संग्रहादिति वृद्धाः॥

इतितीर्थश्राद्धविचारः॥

मैत्रायणीयपरिशिष्टे

महानदीषु सर्वासु तीर्थेषु च गयामृते।
जीवत्पिताऽपि कुर्वीत श्राद्धं पार्वणधर्मवत्॥

मृतमातृकस्य तु प्रासङ्गिको गयाप्राप्तौ प्रतिप्रसवः श्रूयते परिशिष्टे-

अन्वष्टक्यां गयाप्राप्तौ सत्यां पञ्चमृतेऽहनि।
मातुः श्राद्धं सुतः कुर्यात् पितर्यपि च जीवति।

इतिप्रासङ्गिकप्राप्तौ सत्यां कार्यं न तूद्दिश्य गत्वेत्यर्थः। ततश्च गयातिरिक्ततीर्थे जीवत्पितृकेण वक्ष्यमाणसर्वोद्देश्येन श्राद्धं कार्यम् गयायां तु यदि प्रसङ्गाद्याति मृतमातृकस्तदा मातृपार्वणमात्रं कुर्यात्। अमृतमातृकस्तु नेत्येव कालदर्शस्मृतिरत्नावलीकारादयः। अपरे तु जीवत्पितृकश्राद्धविधायकवाक्यानां साधारण्याद् गयायामपि जीवत्पितृकेण पितृपित्रादिभ्यो वक्ष्यमाणेभ्यः श्राद्धं कार्यम् एतस्मिन् श्राद्धे

मृतमातृकस्य पितृपत्नीत्वेन मातृश्राद्धसिद्धावपि अन्वष्टक्यामित्यादिवचनं मातृत्वादिरूपेण पृथक् पार्वणप्राप्त्यर्थम्। गयाश्राद्धंनिषेधवचनानि तु मृतमातृकेणापि तच्छ्राद्धोद्देशेन न गन्तव्यमित्येवंपराणीत्याहुः।

भ्रातरस्तु यदि विभक्ताः युगपदयुगपद्वा तीर्थं गतास्तदा पृथक् श्राद्धं कुर्युः। अविभक्तास्तु युगपद्गताश्चेत्तदा ज्येष्ठेनैव कार्यम्। 'एकेनैवाविभक्तेन कृते सर्वैस्तु तत्कृतमि'तिवचनात् कुर्युर्गयाश्राद्धम् पृथक् पृथक्। विधवा अपुत्रा चेत् कुर्यात् 'सपुत्रया न कर्तव्यं भर्तुः श्राद्धं कदाचन'इतिस्मृतेः। अपुत्रया तु कार्यमेव। 'अपुत्रा पुत्रवद् पत्नी' इतिवचनात्। केचित्तु पुत्रवत्यापि पुत्रासन्निधाने ब्राह्मणद्वारा श्राद्धं कारणीयमित्याहुः।

संकल्पे च वर्ज्यानाह वसिष्ठः—

आवाहनं स्वधाशब्दमर्घ्यमग्नौ करणं तथा।
विकिरं पिण्डदानं च सङ्कल्पे षड्विवर्जयेत्॥

पाद्मे सृष्टिखण्डे।

एतामन्त्रकनामगोत्राभ्यां कुर्युः। देवोभ्यो नमः स्वधा पितृभ्यो नमः इति मन्त्राभ्यां वेति एवंचानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु इति-स्मृत्यर्थसारे अनुपनीताः स्त्रीशूद्राश्च श्राद्धमृत्विजा कारयेयुः स्वयंवा।

अथाधिकारापवादः।

तत्र यतिना न कार्यम् 'न कुर्यात्सूतकं भिक्षुः श्राद्धपिण्डोदकक्रिया' मिति वचनात्। द्विजातिकर्मभ्यो हानिः पतनमिति वचनात् उपपातक्यादिना कार्यमेव। तस्य नित्यनैमित्तिकयोर्विशेषाभावात्।

अथतीर्थश्राद्धे संप्रदाननिर्णयः॥

गयातिरिक्ततीर्थेषु पितृपार्वणं मातामहपार्वणं चेतिद्वैविध्यम्।
कर्षूसमन्वितं मुक्त्वा तदन्यच्छ्राद्धषोडशम्॥
प्रत्याब्दिकं च शेषे तु पिण्डास्तु षडितिस्थितिरिति॥

स्मृतिरत्नावलीकारादयः।

स्मृत्यर्थसारे तु—तत्र मातृश्राद्धं पृथक् प्रशस्तमिति कृताकृतत्वमुक्तम् अन्ये तु मातामह्यादिपार्वणं परि पृथगित्याहुः ॥ पित्रादिनवदैवत्यं-तथा द्वादशदैवतमित्यग्निपुराणोक्तेः । विकल्पार्थस्तथाशब्दः ॥ मातृमातामही यदा पार्वणे पृथक् न स्तस्तदा पित्रादीनां मातामहादीनां च सपत्नीकत्वेन निर्देशः मात्रादीनां पृथक्श्राद्धपक्षे तु यदि ताः कृतसहगमनास्तदा भवता चोद्दिश्य सहैवायुग्मब्राह्मणभोजनं पिण्डोऽपि चोभयोद्देशेन एक एवेति मदनपारिजातकारादयः । हेमाद्रिप्रभृतयस्तु सांवत्सरिकमात्रं सहैव कार्यम् तीर्थादौ तु पृथगेव देयमित्याहुः । सपत्नमातृसपत्नपितामहीसपत्नप्रपितामहीभ्योऽपि दद्यात् । सपत्नमातामहीभ्योपि । मातृसपत्नीनां तु पुत्रवतीनां कृपया सपत्नीपुत्रो दद्यात् । एवंपितृभ्योपि देयम् । तच्चैकोद्दिष्टमेव 'पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैवहि' इतिजातुकर्ण्यवचनात् । अत्र मातृग्रहणं सपत्नमातृपरमिति हेमाद्रिः—

भ्रात्रे भगिन्यै पुत्रीयस्वामिने मातुलाय च ।
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणमिति सुमन्तूक्तेः ॥

यत्तु वचनम्—

पितृव्यभ्रातृमातृणामपुत्राणां तथैवच ।
मातामहस्यापुत्रस्य श्राद्धादि पितृवद्भवेत् इति ॥

तदावश्यकतया तुल्यत्वार्थं न तु पार्वणविधानेन तुल्यत्वार्थम् । अत्र च पितृमातामहपार्वणे नित्यमन्यानि तु पार्वणैकोद्दिष्टानि काम्यानि । गयायां तु नित्यपार्वणे नित्यम् । अन्यानि तु पार्वणैकोद्दिष्टानि काम्यानि । गयायां तु नित्यपार्वणमावश्यकमिति वक्ष्यते । अत्र च तन्त्रेणैव पाकः ।

बहूनामथवा द्वाभ्यां श्राद्धं चेत्स्यात्समेऽहनि ।
तन्त्रेण श्रपणं कृत्वा पृथक् श्राद्धानि निर्वपेदित्यत्रिस्मृतेः ।

अत्र चाशक्तेनैकस्मिन्ब्राह्मणे सर्वाण्येकोद्दिष्टानि कार्याणि—अत एव चतुर्विंशन्मते ।

तीर्थेषु चैव सर्वेषु माघमासे मघासु च ।
एकस्मिन्ब्राह्मणे सर्वानाचार्यादीन् प्रपूजयेदित्युक्तम् ॥

पिण्डदानं तु पृथगेव—

अद्वैवं च सर्ववर्णानां तन्त्रमेव च ।
कालभेदेन मन्त्रं स्याद्देशभेदेन चैव हि ॥
तस्मात्तन्त्रविधानात्तु यौगपद्यं प्रतीयत इति ।

संग्रहकारोक्तेः ।

यस्तु परार्थं तीर्थं याति तेनादौ तत्पितृश्राद्धकार्यं पश्चात्स्वीयानामिति प्रपञ्चितम् । हेमाद्रौ विधवा तु भर्तृपार्वणं स्वपितृपार्वणं च कुर्यात् ।

स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ॥

इति स्मृतिदर्पण ( धृत ) लिखितस्मृतेः ।

यस्यास्तु श्वशुरो जीवति सा भर्तृतत्पितामहप्रपितामहेभ्यः । स्वपितरि जीवति तु द्वारलोपात्पितृपार्वणलोप एव । मृतश्वश्र्वादेस्तु-श्वश्र्वादिपार्वणं कृताकृतमेव न दैवतम् ।

केचित्तु मात्रादिपार्वणेन सह द्वादशदैवतमित्याहुः । अपरे तु स्वमातामहपार्वणेन सह द्वादशदैवतमित्याहुः । अन्ये तु स्वमातामहादिपार्वणेन सह अष्टादशदैवतम् । एतच्च त्रयमप्यपुत्रविषयमिति केचित् । जीवत्पितृके तु विशेषः ।

वृद्धौ तीर्थे च संन्यस्ते जाते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्योदद्यात्स्वयं सुतः ॥

विष्णुना त्वन्योऽपि विशेष उक्तः—पितरि जीवति येषां पिता कुर्यात् तेषां कुर्यात् पितरि पितामहे च जीवति येषां पितामहः । पितरि पितामहे प्रपितामहे जीवति नैव कुर्यादिति ॥

तस्मात्पितुरेव पित्रादयो मातामहादयो मातामह्यादयश्च जीवत्पितृकस्य तीर्थश्राद्धदेवताः एवं च स्वमातुः पितृपत्नीत्वेनैकोद्दिष्टं मातामहस्य च स्वपितृश्वसुरत्वेन स च यदि द्रव्यादिदानप्रेरितपुमंतरवत् । पितृनियुक्तस्तत्पुत्रार्थमेव याति यदा तदा यजमानस्य पितृपितामहप्रपितामहानामित्येवमाकारकवाक्यरचनया एकं श्राद्धं कृत्वा स्वस्यापि श्राद्धाहे तु प्रासङ्गिकतीर्थप्राप्तेः कृतत्वात्पितुः पित्रादीनामित्येवंविधवाक्यरचनया श्राद्धान्तरं कुर्यात् । न तु तन्त्रं प्रसङ्गो वा भिन्नाधिकारित्वात् । यदा मृतमातृकः पित्रर्थं गयां याति तदा प्रथमश्राद्धे यजमानपत्नीत्वेन स्वमात्रे एकोद्दिष्टम् । द्वितीये तु पितृपत्नीत्वेनैकोद्दिष्टमेव ततो मात्रादिपार्वणम् कालदर्शादिमते तु गयायां जीवत्पितृकस्य श्राद्धानधिकारात् । पितृपत्नीत्वेन श्राद्धं नास्त्येव ॥ गयातिरिक्ततीर्थेषु तु पितृपत्नीत्वेनैकोद्दिष्टमेव । न तु पार्वणं वचनाभावात् । यत्तु जीवेद्यदिचवर्गाद्यस्तद्वर्गं तु परित्यजेदिति तदभावास्यादिविषयम् । एवं च श्राद्धं पिण्डांश्च कृत्वा सामान्यपिण्डोऽपि देयः । यदाह देवलः—

एकं पिण्डमुपादाय संस्कृत्य च यथाविधि ।
ज्ञातिवर्गस्य कृत्स्नस्य सामान्यमितिनिर्वपेत् ॥

इतिवक्ष्यमाणमंत्रेण स च मंत्रः—

पितृवंशे मृता ये च मातृवंशे च ये मृताः ।
गुरुश्वसुरबन्धूनां येचान्ये बान्धवाः स्मृताः ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
क्रियालोपगताश्चैव जात्यन्धाः पङ्गवस्तथा ॥
विरूपा आत्मगर्भाश्च ज्ञाताज्ञाताः कुले मम ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतामिति ।

अत्रश्लोकत्रयस्यापि—एकमन्त्रता । तावतैव तथा वाक्यार्थपरिसमाप्तेः ।

आब्रह्मणा ये पितृवंशजाताः मातुस्तथा वंशभवा मदीयाः।
वंशद्वये ये मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥
मित्राणि सख्यः पशवश्च वृक्षाः स्पृष्टादृष्टाश्च कृतोपकाराः।
जन्मान्तरे ये मम संगताश्च तेभ्यः स्वधापिण्डमहं ददामि ॥

इतिश्लोकाभ्यां पिण्डान्तरं देयम्। अत्रापि पूर्ववदेकमन्त्रता। यस्य त्वेतावन्तं श्राद्धकलापं प्रत्येकं च पिण्डदानं रोगादिना कर्तुमशक्तिर्व्याध्यादिना तावतः कालस्याभावो वा ससंक्षेपश्राद्धं कुर्यात्। तच्च "शक्त्या श्राद्धमहं करिष्ये" इतिसंकल्प्य—

ॐपिता पितामहश्चैव तथैव प्रपितामहः।
मातामहस्तत्पिता च मातृमातामहादयः॥
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतामिति।

मन्त्रेणैकपिण्डं दद्यात्।

अथ तीर्थे अस्थिप्रक्षेपविधिः॥

यमः—

गङ्गा तोयेषु यस्यास्थि क्षिप्यते शुभकर्मणः।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्सनातनात् ॥

अत्र कालविशेषः—

अस्तं गते गुरौ शुक्रे तथा मासे मलिम्लुचे ॥
गङ्गायामस्थिनिक्षेपं न कुर्यादितिगौतमः ॥

तथा—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ॥
प्रथमाब्दे न कुर्वीत यदि न स्यात्सपिण्डनम् ॥

कृते तु सपिण्डने इतिपाठान्तरम्।

तथा—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम्।

प्रथमेऽब्दे न कुर्वीत कृतं यस्यौर्ध्वदैहिकम् ॥

"यदि स्यात् भक्तिमान सुत" इति पाठान्तरम्। दशाहाभ्यन्तरे तु न दोषः।

दशाहाभ्यन्तरे यस्य गङ्गातोये ऽस्थि मज्जति।
गङ्गायां मरणं यादृक् तादृक् फलमवाप्नुयात् ॥

इतिवचनात् ॥

पुराणे—

मातुः कुलं पितुः कुलं वर्जयित्वा नराधमः।
अस्थीन्यन्यकुलस्थानि नीत्वा चान्द्रायणं चरेत् ॥

इदं च द्रव्यादिलोभविषयकम्। दयादिना तन्नयने फलश्रवणात्।

अथ प्रकीर्णका धर्माः।

एकां चण्ड्यां रवौ सप्त तिस्रः कुर्याद्विनायके।
चतस्रो विष्णवे कार्याः शिवस्यार्धप्रदक्षिणम् ॥
शिवं प्रदक्षिणं कुर्वन् सोमसूत्रं न लङ्घयेत्।

सोमसूत्रादिपरिमाणं विश्वेश्वरादौ दोषाभावं च काशीप्रकरणे वक्ष्यामः।

नमस्कारेऽपि विशेषः—

अग्रे पृष्ठे वामभागे समीपे मन्दिरेऽपि च।
जपहोमनमस्कारान्न कुर्याद् देवतालये ॥
अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयःस्मृतः।
वामभागे भवेन्नाशो दक्षिणे सर्वकामदः ॥

शिवस्य त्वग्रेऽपि कार्यः—

पशुः पशुपतेरग्रे दण्डवत्पतितो भुवि ।
पतन्ति पातकाः सर्वे नोत्तिष्ठन्ति तदा सहेति वचनात्।

पाद्मे—

द्रव्यमन्नं फलं तोयं शिवस्वं न स्पृशेत्कचित्।

लङ्घयेन्नैव निर्माल्यं कूपे सर्वं विनिक्षिपेत् ॥

ब्राह्मे तु—

ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवं च प्रदापयेत् ।
रुद्राङ्गलग्नमग्नौ च दहेत्सर्वं च तत्क्षणात् ॥
अन्येभ्यस्त्वथ देवेभ्यो यत्तद्दीनेषु निक्षिपेत् ।
विप्रेभ्यस्त्वथ देवेभ्यो मातृभ्यो यन्निवेदितम् ॥
ब्राह्मणेभ्यस्तु तद्देयं गणेशादिनिवेदितम् ।

विश्वेश्वरादौ त्वपवादं वक्ष्यामः ।

महादानानि ये विप्रा गृह्णन्ति ज्ञानदुर्बलाः ।
वृक्षास्ते द्विजरूपेण जायन्ते ब्रह्मराक्षसाः ॥
अपि चेत् प्रतिगृह्णीयात् ब्राह्मणो वृत्तिकर्षितः ।
दशांशमर्जितं दद्यादेवं धर्मो न हीयते ॥

देवलः—

न नदीषु नदीं ब्रूयात्पर्वतेषु च पर्वतम् ॥

स्कान्दे—

स्नानकालेन्यतीर्थेषु जप्यतां जाह्नवी जनैः ।

यदा मार्गगामिनोऽन्तरा सरस्वतीव्यतिरिक्ता नदी आपतति तदा परपारे स्नानादिकं कार्यम् । सरस्वत्यास्त्वर्वाक्तीरे तदुक्तम् ।

मार्गेऽन्तरा नदीप्राप्तौ स्नानादि परपारतः ।
अर्वागेव सरस्वत्या एष मार्गगतो विधिः ॥

यत्र त्वर्वाक्तीर एव तीर्थ विशेषः । सरस्वत्यां वा परे पारे तीर्थविशेषस्तत्रोक्तनियमानादरेण विशिष्टतीर्थ एव सर्वं कर्तव्यम् ।

नारदीये—

यः शूद्रेणार्चितं लिङ्गं विष्णुं वा प्रणमेन्नरः ।
न तस्य निष्कृतिर्ह्यस्ति प्रायश्चित्तायुतैरपीति ॥

योषिद्भिः पूजितं लिङ्गमित्यादि स्मृत्यन्तरे। इदं चेदानींतनप्रतिष्ठापितविषयकम् न तु पुरासिद्धविषयकम् तथा—

शूद्रो वानुपनीतो वा स्त्रियो वा पतितोऽपि वा।
केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते ॥

तथा—

वपनं मैथुनं तीर्थं वर्जयेद् गर्भिणीपतिः।
श्राद्धं च सप्तमान्मासादूर्ध्वं सर्वत्र वेदवित् ॥

श्राद्धम्-श्राद्धभोजनम्।

तथा—

न देवः पर्वताग्रेषु न देवो विष्णुसद्मनि।
देवश्चिदानन्दमयो भक्तिदार्ढ्येन लभ्यते ॥

## इतिसाधारणस्तीर्थविधिः।

---

## अथ प्रयागप्रकरणम्।

इह च 'त्रिस्थलीयात्रामहं करिष्ये' इति सामान्यतो वा, 'प्रयागादियात्राः करिष्ये' इतिविशेषतो वा युगपत् संकल्पो न घटते एकप्रयोगविधेरभावात् किन्तु, अन्तिममेव तीर्थमुद्दिश्य संकल्पः कार्यः आन्तरालिकं तु सर्वं प्रासङ्गिकम् 'अतोऽर्द्धं तीर्थफलमस्य' इति वचनात्। यात्रायाः अर्धमेव फलं स्नानश्राद्धादेस्तु पूर्णम्। यद्वा दाक्षिणात्येनादौ प्रयागयात्रैव तन्मात्रसंकल्पपूर्वकं कार्या। ततः प्रयागे काशीयात्रासंकल्पः ततः काश्यां गयायाः। तत्र च तत्तद्यात्राफलं पूर्णं भवत्येव किन्तु दूरस्थसमीपस्थकर्तृकयात्रायामिव योजनतारतम्येन प्रयासतारतम्ये फलतारतम्यं बोध्यम्।

### अथ मुण्डनविचारः।

तत्र विधवानां साधारणतीर्थविधावेव मुण्डनमुक्तं सधवानां तु विशेषः।

विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।
सर्वान् केशान् समुद्धृत्य च्छेदयेदङ्गुलद्वयम् ॥
तीर्थादिषु सभर्तॄणां स्यादेवं केशवापनम् ।

इतिवचनात् । प्रयागे सभर्तृकाणां सर्वकेशसमुच्चयस्य (१) द्व्यङ्गुलच्छेदमात्रं कार्यमिति दिवोदासीये । अन्ये तु समूलमेव वपनमाहुः । तत्प्रापकं तु मुण्डनं चोपवासश्चेति सामान्यवचनम्, तीर्थान्तरेषु शिष्टाचाराभावान्न कार्यमिति वदन्ति । इदञ्च प्रयागमुण्डनं योजनत्रयाधिकदेशागतेन कार्यम् न न्यूनदेशादागतेन ।

ऊर्ध्वमब्दाद्विमासोनाद्यदा तीर्थं व्रजेन्नरः ।
तदा तद्वपनं शस्तं प्रायश्चित्तमृते द्विजः ॥
प्रयागे प्रतियात्रं तु योजनत्रय इष्यते ।

यत्तु 'नैकसंवत्सरे कुर्यात्प्रयागे वपनद्वयम्' इति तद्योजनत्रयान्तर्वासिविषयम् ।

अथ माघस्नानारम्भकालः ।

विष्णुः—सौरमासमभिप्रेत्याह- 'तुलामकरमेषेषु प्रातः स्नायी सदा भवेत्' इति । पाद्मे तु सावनम्—

एकादश्यां शुक्लपक्षे पौषमासे समारभेत् ।
द्वादश्यां पूर्णिमायां च शुक्लपक्षे समापनम् ॥

विष्णुः—

दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत् ।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे ॥ इति ॥

अत्रैकादश्यां पौर्णमास्यां वा आरम्भे यदा माघस्याधिकमासता भवति तदा काम्यानां तत्र समाप्तिप्रतिषेधान्मासद्वयं स्नानं तन्नियमाश्चानुवर्तन्ते । सौरपक्षे तु न काचिदनुपपत्तिः । अत्र च—

(१) सर्वकेशसमूहस्येति पाठो युक्तः प्रतिभाति ।

माघमासमिमं पूर्णं स्नास्येऽहं देव माधव।
तीर्थस्यास्य जले नित्यमिति संकल्प्य चेतसि॥

इतिविष्णुवचने अस्य तीर्थस्येति मन्त्रलिङ्गाद्यत्र तीर्थे स्नानारम्भस्तत्र समापनं कार्यम्। एकप्रयोगाणामेकदेशत्वस्यैककालत्वस्य साधनाच्च। प्रत्यहं संकल्पमन्त्रश्च पाद्मे—

मकरस्थे रवौ माघे गोविन्दाच्युतमाधव।
स्नानेनानेन मे देव यथोक्तफलदो भवेति॥

अथ प्रयागमरणविचार:—

दुष्कृतोऽतिदुराचारो ब्रह्महत्यादिपातकी।
हरिं ध्यात्वा त्यजेद्देहं प्रयागे मुक्तिमान्भवेत्॥

इत्यादिनानापुराणवचनैः प्रयागे मरणं नानाफलार्थत्वेन मोक्षार्थत्वेन च विधीयते। श्रुतिरपि 'सितासिते' इत्यादिका। अत्रकेचित्—प्रयागे मरणं न सर्ववर्णसाधारणम्—

शूद्राश्च क्षत्रिया वैश्या अन्त्यजाश्च नराधमाः।
एते त्यजेयुः प्राणान्वै वर्जयित्वा द्विजं नृप॥
पतित्वा ब्राह्मणस्तत्र ब्रह्महा चात्महा भवेत्।

इति ब्रह्मणस्य निषिद्धत्वादित्याहुः। तदुक्तवाक्यस्य निर्मूलत्वादुपेक्ष्यम्। अत्र च यथाशक्ति प्रायश्चित्तं कृत्वा स्वीयश्राद्धाधिकार्यभावे जीवश्राद्धं च पिण्डान्तं निर्वर्त्य कृतोपवासः। परेह्नि लेखपूर्वकं सङ्कल्प्य विष्णुं ध्यायञ्जलप्रवेशादि कुर्यादिति संक्षेपः। एवं मृतानां त्रिरात्रमेवाशौचं सर्ववर्णसाधारणम्। न तु दशरात्रादि। तदुक्तम्— 'आशौचं स्यात् त्र्यहं तेषाम्' इति।

आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः।
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः॥
तृतीये तूदकं दत्वा चतुर्थे श्राद्धमाचरेदिति।

श्राद्धमैकादशाहिकम् । पुत्रस्यापि ऽयहमेवाविशेषादिति दिवोदासीये । इदानीं तु सपिण्डाद्याः सर्वेऽपि दशाहाद्येवाचरन्ति । यमुनास्नाने च विशेषः—

आदित्यदुहितर्देवि यमज्येष्ठे यशस्विनि ।
त्रैलोक्यवन्दिते पुण्ये पापं मे यमुने हर ॥
इत्युक्त्वा च निमज्ज्यादौ उन्मज्ज्याचम्य भक्तितः ।
तर्पयेच्च यमं वार्भिर्नाभिमात्रे जले स्थितः ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
दैवतर्पणवद्द्याच्चतुर्दशाञ्जलीनिति पाद्मे ।

## इति प्रयागप्रकरणम् ।

---

## अथ काशीप्रकरणम् ।

लैङ्गे—

जन्मान्तरसहस्रेण यत्पापं पूर्वसंचितम् ॥
अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयमिति ॥

तथा—

मेरुमन्दरमात्रोपि राशिः पापस्य कर्मणः ।
अविमुक्तं समासाद्य तत्क्षणाद् व्रजति क्षयमिति ॥

अत्र प्रारब्धव्यतिरिक्तसकलाधर्मक्षयो बोध्यः । काशीप्रवेशादेतज्जन्मार्जितमेव पापं नश्यति तत्तत्तीर्थस्नादिना तु प्राग्भवीयपापक्षय इति केचित् । अन्ये तु अत्र प्रवेशादखिलजन्मीयपापनाशः । स्नानादिना तु तद्वासनानिवृत्तिरित्याहुः । अपरे तु प्रवेशादशेषमेव पापं

नश्यति तत्तीर्थस्नानादिना तु काश्यामुत्पन्नानां निवृत्तिः। न च तेषामपि लिङ्गशरीरस्य काशीप्रवेशात्सकलपापनिवृत्तिर्जातेति वाच्यम्। षाष्ठतिर्यगधिकरणन्यायेन (१)—

यतो विधिनिषेधे तु मनुष्याणामधिक्रिया।
अतः पशुपिशाचाद्या धर्माधर्मबहिष्कृताः॥

इतिपद्मपुराणाच्च। मनुष्याधिकारिकत्वाच्छास्त्रस्य लिङ्गशरीरे पापनाशासंभवात्। अतस्तत्तीर्थस्नानादेकद्व्या दिजन्मीयपापनाशवचनानि काश्युत्पन्नविषयाणि। अन्येतु गमनादिना प्रत्येकं सर्वपापनाशेऽपि प्रवेशाद्यज्जातीयं सर्वं पापं नष्टं तद्विजातीयमेव स्नानादिना नश्यतीत्याहुः। काशीखण्डे द्विपञ्चाशेऽध्याये ज्येष्ठशुक्लप्रतिपदो दशम्यवधि दशाश्वमेधे स्नानाद्युक्तम्।

जेष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम्।
दशाश्वमेधिके स्नात्वा मुच्यते जन्मपातकैः॥
ज्येष्ठशुक्लद्वितीयायां स्नात्वा रुद्रसरोवरे।
जन्मद्वयकृतं पापं तत्क्षणादेव नश्यति॥
एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः।
आशुक्लपक्षदशमीं प्रतिजन्माघमुत्सृजेत्॥
तिथिं दशहरां प्राप्य दशजन्माघहारिणीम्।
दशाश्वमेधिके स्नातो यामीं (म्यां) पश्येन्न यातनाम्॥
लिङ्गं दशाश्वमेधेशं दृष्ट्वा दशहरातिथौ।

---

(१) षाष्ठतिर्यगधिकरणन्यायेनेति। अयं न्यायः षष्ठाध्यायप्रथमपादस्थ चतुर्थपञ्चमाभ्यां सूत्राभ्यां मीमांसायां निरूपितः। तथा हि तिरश्चां पङ्ग्वन्धमूकबधिराणां च यागेऽधिकारोऽस्ति न वेति संशये प्रधानवाक्येन 'स्वर्गकामो यजेत' इत्यनेन स्वर्गकाममात्रस्याधिकारश्रवणात् तेषामपि स्वर्गेच्छासत्वादस्ति अधिकारः इति पूर्वपक्षे आज्यावेक्षणक्लृप्तिवाचनादीनां क्रत्वर्थतया तल्लोपे क्रत्वनिष्पत्त्या नाधिकार इति सिद्धान्तः।

दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः ॥
स्नातो दशहरायां यः पूजयेल्लिङ्गमुत्तमम् ।
भक्त्या दशाश्वमेधेशं न तं गर्भदशा स्पृशेत् ॥
ज्येष्ठे मासि सिते पक्षे स्नात्वा रुद्रसरे नृपः ।
कुर्वन्वै वार्षिकीं यात्रां न विघ्नैरभिभूयते ॥
दशाश्वमेधावभृथैर्यत्फलं सम्यगाप्यते ।
दशाश्वमेधे तत्प्रोक्तं स्नानाद् दशहरातिथौ ॥
स्वर्धुन्याः पश्चिमे तीरे नत्वा दशहरेश्वरम् ।
न दुर्दशामवाप्नोति पुमान्पुण्यतमः क्वचित् ॥

## इति काशीप्रकरणम् ।

---

## अथ गयाप्रकरणम् ।

तत्र गयाश्राद्धे ऽधिकारिणः प्रघट्टकादेव ज्ञेयाः । विशेषस्तु-
'पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम्'इत्यस्यापवादः—

आत्मजो वान्यजो वापि गयाकूपे यदा तदा ।
यन्नाम्ना पातयेत्पिण्डं तन्नयेद् ब्रह्मशाश्वतम् ॥

संन्यासिना तु श्राद्धस्थलीषु दण्डस्पर्शनमात्रं कार्यं । न तु श्राद्धतर्पणादि । तदुक्तं वायवीये—

दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः ।
दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते ॥

स्पृष्ट्वेत्यतर्भावितण्यर्थः स्पर्शयित्वेत्यर्थः ।

तथा—

गयायां मुण्डपृष्ठे च कूपे यूपे वटे तथा ।
दण्डं प्रदर्शयन्भिक्षुः पितृभिः सह मुच्यते ॥

अथ गयाश्राद्धे कश्चिद्विशेषो हेमाद्रौ—

महालये गयाश्राद्धे प्रेतश्राद्धे दशाहिके ।
पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत् ॥

अयं पिण्डः स्वधा नमः इत्यादिनिगमे पिण्डशब्दप्रयोगः ॥

तथा—

वृद्धिश्राद्धे गयाश्राद्धे प्रीतिश्राद्धे तथैव च ।
सपिण्डीकरणश्राद्धे न जपेत्पितृसूक्तकम् ॥

इत्यभिश्रवणनिषेधः । अब्दमध्ये गयाश्राद्धकरणे वृद्धिप्राप्ताविव मासिकान्यपकृष्य कृत्वा गयाश्राद्धं कुर्यादिति केचित् । तत्र मूलं मृग्यम् । महापातकिविषये तु विशेषो ब्रह्मपुराणे—

क्रियते पतितानाञ्च गते सम्वत्सरे क्वचित् ।
देशधर्मप्रमाणत्वाद् गयाकूपे स्वबन्धुभिः ॥

संग्रहे—

महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुतः ॥

गयाश्राद्धं च नित्यं—

गयायां पिण्डदानेन पितॄणामनृणो भवेत् ।

'ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्' इति (जै. अ. ६ पा २ सू. ३१) (१) याष्ठन्यायाच्च । अत एव कौर्मे—

(१) ब्राह्मणस्येति । 'सोमेन यजेत' 'स्वाध्यायमधीयीत' 'प्रजामुत्पादयेत्' इति श्रूयते यत्र सोमः काम्यः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति कामसंयोगेन पठितत्वात् एवमध्ययनप्रजोत्पादनयोरपि विश्वजिन्न्यायेन स्वर्गः फलमिति त्रयाणां काम्यत्वमिति प्राप्ते सिद्धान्तः 'वसन्ते वसन्ते ज्योतिषा यजेत' इति वीप्सया प्रति वसन्तं निमित्तीकृत्य सोमयागस्य विधानान्नित्यत्वम् । एवमध्ययनमपि दृष्टप्रयोजनस्य अनुष्ठेयार्थज्ञानस्य संभवेनन स्वर्गफलकम् किन्तु क्रत्वनुष्ठानस्य नित्यत्वेन तद्धेतुतया नित्यम् । 'अनुत्पाद्य सुतान् लोकं गच्छति' इति स्मृतेर्लोकसिद्ध्यर्थमुत्पादनमपि नित्यमिति । अत एव 'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यः यज्ञेन देवेभ्यः प्रजया पितृभ्यः एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी' इति । अत्र ब्राह्मण ग्रहणं क्षत्रियवैश्ययोरुपलक्षणम् इति ।

गयाभिगमनं कर्तुं यः शक्तोपि न गच्छति ।
शोचन्ति पितरस्तस्य वृथा चास्य परिश्रमः ॥ इति ॥

तस्माद् गयाकृत्यं नित्यं पुत्रस्य । अतो यथाशक्त्यप्यनुष्ठेयम् । तत्रापि सकृत्करणमेव नित्यम् । तावतैव च शास्त्रार्थसिद्धेः । आवृत्तिबोधकवीप्साद्यभावाच्च चातुर्मास्यवत् । पुनःकरणे तु फलमधिकं तद्वदेव । तस्मादमुक्ते पित्रादौ नरकोद्धारादि यथायथं फलम् । काशीमरणादिना मुक्ते तु तस्मिन्कर्तृगतः प्रत्यवायाभाव एव फलं भवतीति सिद्धम् ।

## इति गयाप्रकरणम् । (१)

---

## अथ परिशिष्टम् ।

प्रघट्टके शङ्खलिखितौ ।

प्रतिग्रहादुपावृत्तः संतुष्टो येन केनचित् ।
अहंकारविमुक्तश्च स तीर्थफलमश्नुते ॥

अनेन तीर्थयात्रागतेन प्रतिग्रहो निषिध्यते । पाद्मे —

न तीर्थे प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि ।
अपि कामातुरो जन्तुर्यथा रक्षति मातरम् ॥
तीर्थे प्रतिग्रहो यस्तु तीर्थविक्रय एव सः ।
विक्रीतायां तु गङ्गायां विक्रीतः स्याज्जनार्दनः ॥
जनार्दने तु विक्रीते विक्रीतं भुवनत्रयम् ।
यस्तु लौल्याद्द्विजः क्षेत्रे प्रतिग्रहरुचिर्भवेत् ॥
नैव तस्य परो लोको नायं लोको दुरात्मनः ।

---

(१) इति श्रीधर्मशास्त्रसर्वस्वाख्ये निबन्धे तीर्थविषयककर्तव्यताधिकारे श्रीलक्ष्मीधरसूनुना भट्टोजिदीक्षितेन कृते त्रिस्थलीसेतुः समाप्तः ॥ इति ख. पुस्तके अत्रैव ग्रन्थसमाप्तिर्दृश्यते । अग्रेतनः पाठस्तु कपुस्तकमात्रवर्ती ।

ब्रह्मपुराणे—

प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र नारायणः स्वामी नान्यः स्वामी कदाचन ।
तत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि ।

दानधर्मे—

भाद्रशुक्लचतुर्दश्यां यावदाक्रमते जलम् ।
तावद्गर्भं विजानीयात्तदूर्ध्वं तीरमुच्यते ॥

ब्राह्मे—

सार्द्धहस्तशतं यावत् गर्भतस्तीरमुच्यते ।

स्कान्दे—

तीराद् गव्यूतिमात्रं तु परितः क्षेत्रमुच्यते ॥
अत्र दानं जपो होमो गङ्गायां नात्र संशयः ॥

तटयोः प्रत्येकं क्रोशद्वयाख्यं गङ्गायां क्षेत्रमन्यत्रानुक्तो न (२) ।

भविष्येऽपि—

गङ्गासीमां न लङ्घन्ति सर्वपापाण्यशेषतः ।
दिशो दश पलायन्ते सिंहान्दृष्ट्वा यथा मृगाः ॥
एकयोजनविस्तीर्णा दिक्षु सीमा तटद्वयम् ।

अत्र गुरुचरणाः— गर्भे प्रतिग्रहनिषेधः प्रसिद्धनदीषु, प्रतिषिद्धेतरगण्डक्यादितीरेऽपि । गङ्गायां तु क्षेत्रेपीति शिष्टाः ।

पाद्मे—

अथ चेत्प्रतिगृह्णीयाद् ब्राह्मणो वृत्तिकर्षितः ।
दशांशमर्जितं दद्यादेवं धर्मो न हीयते ॥ इतिशंकरभट्टीये—

---

(२) 'अन्यत्रोक्तम्' इति पाठः सम्यक् प्रतिभाति ।

अथ गयाविधिः।

फलवान् प्रातः सिद्धस्नातोत्पादितं जलं प्रणवेन स्पृष्ट्वा तत्र सङ्कल्पपूर्वकं सचैलं स्नात्वा यथाविधि तीर्थश्राद्धमामेनान्नेन हेम्ना वा ब्राह्मणेषु कुशवटुषु वा यथा संभवं स्वगृह्योक्तप्रकारेण कृत्वेति प्रथमदिनकृत्यम्। द्वितीयदिने फलवान् प्रातःस्नानादिकं कृत्वा प्रेतपर्वतं गत्वा तन्मूलभागे ब्रह्माकुण्डे स्नानतर्पणतीर्थश्राद्धविधिना श्राद्धं पिण्डदानमात्रं वा कृत्वा ततः प्रेतपर्वतशिरसि पूर्ववत्प्रकारेण श्राद्धं कृत्वा कव्यवाडो नल इत्यादिमन्त्रैः पितॄनावाह्य गयापद्धतिविधिना पितृषोडशीं मातृषोडशीं च कुर्यात्। ततो रामतीर्थे पूर्वप्रकारेण पिण्डदानादि कृत्वा प्रेतशिलां गत्वा पिण्डदानादि सर्वं कुर्यात्। तदनन्तरं श्यामशवलाभ्यां वलिं दत्वा इति द्वितीयदिनकृत्यम्। अथ तृतीयदिने पञ्चतीर्थीयात्रां कृत्वा तत्र विधिवत् पिण्डदानादिकं सर्वं कुर्यात्। चतुर्थदिने धर्मारण्यं पञ्चमदिने ब्रह्मसरोवरं गत्वा। अथषष्ठदिने पदेषु श्राद्धं कार्यम्। तत्र प्रथमदिने सप्त पिण्डाः। द्वितीयेऽह्नि तिलगुडपिण्डाः॥ चतुर्थेऽह्नि दुग्धतर्पणम् पञ्चमे दीपप्रदानम्।

इति पञ्चदिनकृत्यम्।

अनन्तरं वटमूले श्राद्धम्। ततोऽष्टतीर्थी यात्रा। तत्र तीर्थेषु पिण्डदानादिकं कृत्वा अनन्तरं त्रिकालसन्ध्यां कृत्वा अनन्तरं यात्रासाङ्गतासिद्ध्यर्थं गदाधरस्य पूजनम्।

इतिसंक्षेपविधिः॥

इति भट्टोजीदीक्षितकृत त्रिस्थलीसेतुसारसंग्रहः॥

---

# तीर्थेन्दुशेखरभूमिका ।

काशीप्रयागगयातीर्थयात्राप्रतिपादकेषु ग्रन्थेषु अयं श्रीमन्नागोजीभट्ट प्रणीतस्तीर्थेन्दुशेखरो नाम ग्रन्थो मुद्रयित्वा प्रकाश्यते ।

अयं नागोजीभट्टः अष्टादशशताब्द्यां बभूवैतत्प्रणीता ग्रन्थाश्च—लघुशब्देन्दुशेखरः, वैयाकरणसिद्धान्तलघुमञ्जूषा, रामायणटीका, रसमञ्जरीप्रकाशः, महाभाष्यप्रदीपोद्योतः, प्रायश्चित्तेन्दुशेखरः, परिभाषेन्दुशेखरः, परमलघुमञ्जूषा, सप्तशतीटीका, चण्डीस्तोत्रप्रयोगविधिः, रसगङ्गाधरटीका गुरुमर्मप्रकाशः, काव्यप्रदीपोद्योतः, पातञ्जलसूत्रवृत्तिः, पातञ्जलसूत्रवृत्तिः भाष्यच्छायाव्याख्या, तीर्थेन्दुशेखरः, तिथीन्दुशेखरः, श्राद्धेन्दुशेखरः, बृहच्छब्देन्दुशेखरः, कुवलयानन्दव्याख्या अलङ्कारसुधा, अष्टाध्यायीपाठः, आचारेन्दुशेखरः, आशौचनिर्णयः, महाभाष्यप्रत्याख्यानसंग्रहः, इष्टिकालनिर्णयः, कात्यायनीतन्त्रम्, तर्कभाषाटीका युक्तिमुक्तावली, तिङन्तसंग्रहः, त्रिस्थलीसेतुः, धातुपाठवृत्तिः, णेरणिवादार्थः, पदार्थदीपिका, प्रभाकरचन्द्रः तत्त्वदीपिका, सरणिः- रसतरङ्गिणीटीका लक्षणरत्नमाला, विषमपदी-शब्दकौस्तुभव्याख्या, वेदसूक्तभाष्यम्, वैयाकरणभूषणसार व्याख्या, व्याससूत्रेन्दुशेखरः, लघुसांख्यसूत्रवृत्तिः, सापिण्ड्यमञ्जरी, स्फोटवादः, शब्दानन्तसागरसमुच्चयः, तिङन्तसागरसमुच्चयश्चेति । एषु आदिमाश्चतुर्दशग्रन्था मुद्रिताः पञ्चदशश्चायमेव। अन्ये च केचनमदुपलम्भगोचरा बहवस्तु नाममात्रेण श्रुताः ।

एतस्य प्रकाशनसमये सरस्वतीभवनादेकमपरं च सुगृहीतनामधेय-पण्डितप्रवर-सर्वतन्त्रस्वतन्त्र वाराणसेयश्रीजोखीराममटरूमलगोयनकासंस्कृतमहाविद्यालयप्रधानाध्यापक—व्याकरणाचार्यधर्ममूर्ति-सरयूपारीणवंशावतंस-श्रीरामयशस्त्रिपाठिमहोदयेभ्य आसादितं मया तत्रादिमं कसंज्ञयाऽपरं च खसंज्ञया व्यवहृतमिति—

सूर्यनारायण शुक्लः ।

# तीर्थेन्दुशेखरभूमिका ।

काशीप्रयागगयातीर्थयात्राप्रतिपादकेषु ग्रन्थेषु अयं श्रीमन्नागोजी भट्ट प्रणीतस्तीर्थेन्दुशेखरो नाम ग्रन्थो मुद्रयित्वा प्रकाश्यते ।

अयं नागोजीभट्टः अष्टादशशताब्द्यां बभूवैतत्प्रणीता ग्रन्थाश्च— लघुशब्देन्दुशेखरः, वैयाकरणसिद्धान्तलघुमञ्जूषा, रामायणटीका, रसमञ्जरीप्रकाशः, महाभाष्यप्रदीपोद्योतः, प्रायश्चित्तेन्दुशेखरः, परिभाषेन्दुशेखरः, परमलघुमञ्जूषा, सप्तशतीटीका, चण्डीस्तोत्र-प्रयोगविधिः, रसगङ्गाधरटीका गुरुमर्मप्रकाशः, काव्यप्रदीपोद्योतः, पातञ्जलसूत्रवृत्तिः, पातञ्जलसूत्रवृत्तिः भाष्यच्छायाव्याख्या, तीर्थे-न्दुशेखरः, तिथीन्दुशेखरः, श्राद्धेन्दुशेखरः, बृहच्छब्देन्दुशेखरः, कुवल-यानन्दव्याख्या अलङ्कारसुधा, अष्टाध्यायीपाठः, आचारेन्दुशेखरः, आशौचनिर्णयः, महाभाष्यप्रत्याख्यानसंग्रहः, इष्टिकालनिर्णयः, कात्या-यनीतन्त्रम्, तर्कभाषाटीका युक्तिमुक्तावली, तिङन्तसंग्रहः, त्रिस्थली-सेतुः, धातुपाठवृत्तिः, णेरणिवादार्थः, पदार्थदीपिका, प्रभाकरचन्द्रः तत्त्वदीपिका, सरणिः- रसतरङ्गिणीटीका लक्षणरत्नमाला, विषम-पदी-शब्दकौस्तुभव्याख्या, वेदसूक्तभाष्यम्, वैयाकरणभूषणसार व्याख्या, व्याससूत्रेन्दुशेखरः, लघुसांख्यसूत्रवृत्तिः, सापिण्ड्यमञ्जरी, स्फोटवादः, शब्दानन्तसागरसमुच्चयः, तिङन्तसागरसमुच्चयश्चेति । एषु आदिमाश्चतुर्दशग्रन्था मुद्रिताः पञ्चदशश्चायमेव। अन्ये च के चनमदुपलम्भगोचरा बहवस्तु नाममात्रेण श्रुताः ।

एतस्य प्रकाशनसमये सरस्वतीभवनादेकमपरं च सुगृहीतना-मधेय-पण्डितप्रवर-सर्वतन्त्रस्वतन्त्र वाराणसेयश्रीजोखीराममटरूम-लगोयनकासंस्कृतमहाविद्यालयप्रधानाध्यापक—व्याकरणाचार्यधर्म-मूर्ति-सरयूपारीणवंशावतंस-श्रीरामयशस्त्रिपाठिमहोदयेभ्य आसा-दितं मया तत्रादिमं कसंज्ञयाऽपरं च खसंज्ञया व्यवहृतमिति—

सूर्यनारायण शुक्लः ।

# तीर्थेन्दुशेखरस्थविषयानुक्रमणिका ।

---



---

# तीर्थेन्दुशेखरस्थविषयानुक्रमणिका ।

श्रीहरिः शरणम् ।

श्रीनागेशभट्टविरचितः

# तीर्थेन्दुशेखरः ।

---

## अथ तीर्थयात्राधिकार्यादिनिर्णयः ।

अधिकारिणः—

'कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत्' इत्यादिस्मृतिभिर्धर्मस्यावश्यकर्त्तव्यतोक्ता । तत्र यज्ञादिधर्मस्य बहुधनादिसाध्यत्वेन तत्रासमर्थान्प्रति तीर्थयात्रा (१) विहिता मात्स्ये-भारते च—

यो दरिद्रैरपि विधिः शक्यः प्राप्तुं जनेश्वर ।
तुल्यो यज्ञफलैः पुण्यैस्तं निबोध महीपते ॥
ऋषीणां परमं गुह्यमिदं भरतसत्तम ।
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते (२) ॥
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ॥ इति ।

तत्र ब्रह्मचारिणो (३) गुर्वनुज्ञयैवाधिकारः, गृहस्थस्यापि यागाद्यनुष्ठानासमर्थस्य तत्रानधिकारिणो वा, साग्नेस्तु सपत्नीकस्यैव,

---

१ असमर्थस्य तीर्थयात्रा इति ख.पु. पाठः । २ ख.पु. जायते इत्यनन्तरं 'तेषु मध्य इति' इत्यधिकः पाठो वर्ततेऽग्रिमः श्लोकश्च न वर्तते । (३) ख. गुर्वाज्ञयैव इतिपा. ।

प्रायश्चित्तार्थं तद्रहितस्यापि, यतेरप्यधिकारः, 'नगरे तीर्थे च पञ्चरात्रं वसन्त' इति कात्यायनोक्तेः, ब्रह्मसंस्थस्य तु न, क्षत्रियादेरपि-

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम।
न वियोनिं व्रजन्त्येते स्नातास्तीर्थेषु सत्तम॥ इतिभारतात्॥

तत्र शूद्रस्य द्विजसेवाऽविरोधे एव, तद्विरोधे तु-

जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम्।
देवताराधनं चेति स्त्रीशूद्रपतनानि षट्॥ इति मनुः।

अत एव (स्त्रियाः) सधवायाः भर्त्रा सहैवाधिकारः, विधवानामपि पुत्राद्यनुमत्या, अनुलोमसङ्कराणामपि तेषां द्विजधर्माधिकारात्, प्रतिलोमसङ्कराणामपि शूद्रसधर्मत्वात्तेषाम्।

तीर्थयात्राफलतारतम्यम्-

वाणिज्यराज्यसेवादिप्रसङ्गेन तीर्थगमने स्नानादिजन्यमेव फलम् न यात्राजन्यम्, उद्देश्यतीर्थान्तरप्रसङ्गेन गमने त्वर्धं यात्राफलम्, वेतनग्रहणेन परार्थं व्रजतोऽपि षोडशांशं यात्राफलम्, परान्नभुजोऽप्येवम्, अन्नदानादिनाऽन्यस्य तीर्थकारणे चतुर्गुणम्, विशिष्टस्य तथा तत्कारणे त्वष्टगुणम्।

मात्स्यादौ-

गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम्।
नरयाने तदर्धं स्यात्पद्भ्यां तत्स्याच्चतुर्गुणम्॥

चतुर्गुणं- चतुरंशं पूर्णमित्यर्थः। तत्र स्नातकस्य सोपानद्भ्यामेव पद्भ्यां गमनम् 'सोपानत्कः सदा व्रजेत्' इति स्नातकप्रकरणे उक्तेः।

द्विर्भोजनं तृतीयांशं हरेत्सर्वं प्रतिग्रहः।
यानमर्धं चतुर्थांशं छत्रोपानहमेव च।

इति जाबाल्युक्तं तु अस्नातकविषयम्, यानमर्धमित्यन्तं तु सर्वविषयम्।

अन्ये तु अस्य वचनस्य सर्वविषयतां मत्वा निरुपानद्भ्यामेव पद्भ्यां पूर्णमित्याहुः ।

कल्पतरौ तु–गोयाने इत्यादि मात्स्यं प्रयागप्रकरणात् तद्विषयमेव जाबाल्यादिवचसि त्वनाश्वास इत्युक्तम् ।

अशक्तस्य तु यानेन गमनेऽपि पूर्णं फलम्, यानमर्धमित्युक्ते· र्नौकायानमपि शक्तस्य दोषाय, यत्र तु नावादिना गमनासम्भव· स्तत्र नौर्न दोषाय, यानि त्वनेकदिनकनौकायानमात्रसाध्यानि समुद्रद्वीपादिनिष्ठानि तत्र द्विजैर्न गन्तव्यम् 'द्विजस्याब्धौ तु नौयातुः शोधितस्यापि सङ्ग्रहः' इति कलिनिषिद्धेषूक्तेः, प्रहरादि· मात्रगम्ये तु न पातकप्रसक्तिः । अङ्गादिदेशेष्वपि तीर्थार्थं गमने न दोषः ।

वायवीये–

अधिमासे च जन्मर्क्षे अस्ते च गुरुशुक्रयोः ।
तीर्थयात्रा न कर्त्तव्या गयां गोदावरीं विना ॥ इति ॥

अत्र चेन ज्योतिःशास्त्राद्यकसकलदोषसङ्ग्रहः ।

तीर्थप्राप्तौ कर्तव्यतानिर्णय :—

तीर्थे स्थित्वा तीर्थान्तरं न स्मरेत् नच ब्रूयात् । गङ्गां तु सर्वत्र स्मरेत् । तथा तीर्थमधिगम्य व्रतोपवासनियमयुक्तस्त्र्यहमवगाहमान· स्त्रिरात्रमुषित्वा सर्वपापेभ्यो मुच्यते इति देवलः ।

मा (र्गा) र्गेऽन्तरा नदीप्राप्तौ स्नानादिपरपारतः ।
अर्वागेव सरस्वत्यामेष मार्गगतो विधिः ॥

स्नानतर्पणाद्यकृत्वा नदीं नातिक्रामेत् 'न स्रवन्तीमतिक्रामे· दनवसिच्य' इति शङ्खात्. इदञ्चार्वाक् तीरे तीर्थविशेषाभावे । सर· स्वत्यां परपारे तीर्थविशेषसत्त्वे तीरद्वयेऽपि स्नानादीति बोध्यम् । तीरद्वयेऽपि तीर्थविशेषसत्त्वे नद्यन्तरेऽप्येवमेव ।

तीर्थयात्राविधिः—

तीर्थं जिगमिषुः पूर्वदिने एकभुक्तहविष्यभोजनब्रह्मचर्यादि नियमग्रहणपूर्वकमुपोष्यापरदिने गणेशेष्टदेवते सम्पूज्य घृतमुख्य- द्रव्यकं तीर्थश्राद्धीयदेवतानां पार्वणविधिना श्राद्धं विधाय यथाशक्ति वस्त्रादिभिर्ब्राह्मणान् सम्पूज्य यात्रासङ्कल्पं विधाय मुहूर्त्तसमये ग्रामान्निर्गत्य तं प्रदक्षिणीकृत्य क्रोशाभ्यन्तरस्थग्रामान्तरं गत्वा श्राद्धशेषघृतेन पारणां कृत्वा दिनान्तरे स्नानादि विधाय नियमवान् गच्छेत् । उपवासदिने एवापररात्रादौ मुहूर्त्ते फलंवस्त्रादिप्रस्थानं कार्यम् उपवासासामर्थ्ये तु एकादशीप्रकरणोक्तनक्ताद्यन्यतमम् । गयायात्रायां मार्गगमनकाले कार्पटीवेषकरणम् । कार्पटीवेषश्च शस्त्रोष्णीषादित्यागो न त्वेतद्बलान्मुण्डनसिद्धिरिति बोध्यम् ।

मुण्डनोपवासविचारः—

प्रायश्चित्तार्थं तीर्थयात्रायामुपवासदिने मुण्डनमपि कार्यम् । केचित् तीर्थयात्रासामान्ये मुण्डनमिच्छन्ति । गयायात्रायां तु वायुपुराणे कार्पटीवेषोक्तेर्मुण्डनमावश्यकमित्यन्ये । परावृत्त्य गृहप्राप्तावपि समीप- ग्रामान्तरे घृतश्राद्धं कार्यम् । अत्रोपवासमपि केचिदिच्छन्ति । अन्यत्रापि तीर्थे तत्प्रवेशदिने कार्पटीवेषः कार्यः । स चोष्णीषशस्त्रा- दित्यागरूपः । तीर्थयात्रायां कामक्रोधलोभा वर्ज्याः । शीतातपादि- द्वन्द्वानि च सोढव्यानि । अनृतौ ब्रह्मचर्यं च कार्यम् । प्रतिग्रहं विना जीवननिर्वाहे ततो निवृत्तिश्च कार्या ।

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥

हस्तसंयमः-परस्वाग्रहणम् । पादसंयमोऽगम्यदेशे गमन- निवृत्तिः । मनःसंयमः-परानिष्टाद्यचिन्तनम् । विद्या-तीर्थमहिम- ज्ञानम् । तप-उपवासादिः । कीर्त्तिः-सच्चरित्रत्वप्रसिद्धिः । एवमह- म्भावत्यागोऽपि । दुष्प्रतिग्रहार्जितधनेन च यात्रा न कार्या । दुष्ट-

भावस्य भक्तिहीनस्य न तीर्थफलम्। शमदमादयोऽप्यत्राङ्गम्। रात्रौ कृतमाध्याह्निकेन प्रातश्चाकृतनित्यक्रियेण मार्गे न चलितव्यम्। शक्तः स्नात्वैव गच्छेत्।

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे।
नगरग्रामदाहे च (१) स्पृष्टास्पृष्टिर्न दुष्यति॥

साक्षादस्पृश्यस्पर्शे ज्ञाते तु दोष एव। मध्ये सूतकादिप्राप्तौ आशौचकालं तत्रैव समाप्य गच्छेत्। मार्गे (र्ग) वैषम्यादिना स्थातुमशक्तौ तु यात्रायां नाशौचम्। मध्यत एव निवृत्तौ सङ्कल्पबाधनिमित्तकं प्रायश्चित्तं कार्यम्। मध्ये मृतस्य सप्तर्षिलोकप्राप्तिः। मध्ये तीर्थान्तरप्राप्तौ तत्रापि स्नानादि कार्यम्।

कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात्।
गण्डकीबाहुतरणात्पुनः संस्कारमर्हति॥

करतोयाजलस्पर्शस्तु न निषिद्धः—

करतोयां कुरङ्गं च त्रिरात्रोपोषितो नरः।
अश्वमेधमवाप्नोति विगाह्य प्रयतः शुचिः॥ इत्युक्तेः।

करतोयां (यायाः) केवलमुल्लङ्घनं न निषिद्धं किन्तु स्नात्वैवेत्यन्ये। तीर्थप्राप्तौ यानारूढो यानस्परित्यज पादचारेण गत्वा तीर्थे दृष्टिपथं गते साष्टाङ्गं प्रणम्य शिरोवेष्टन (व) शस्त्रादीन्परित्यज्य विनीतवेषेण तीर्थं प्रविश्य प्रणवेन तीर्थं स्पृष्ट्वा सचैलं स्नात्वा वपनं कृत्वा पुनर्मन्त्रवत्स्नानं कृत्वा तद्दिने उपवासं कुर्यात्।

तत्पूर्वदिने उपवास इति कश्चित्। उपवासः काम्य एव पापक्षयफलको नत्वावश्यक इति कल्पतरुः। अग्रिमकार्येषु शुद्धिजनक इत्यन्ये मुण्डनोपवासौ च देवलेनोक्तौ—

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।
वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम्॥

---

(१) स्पृष्टस्य स्पृष्टिः स्पृष्टास्पृष्टिः 'अन्येषामपि दृश्यते' इति दीर्घः।

विरजमुत्कलदेशे । दक्षिणदेशस्थलोणारक्षेत्रमपि विरजम्। क्वचित्तु नैमिषं पुष्करं गयामिति पाठः। विशालां पुष्करं गयामित्यन्यत्र, वर्जयित्वा गयां गङ्गामित्यन्यत्र पाठः।

गङ्गाम्प्राप्य सरिच्छ्रेष्ठां वपनं यो न कारयेत्।
स कोटिकुलसंयुक्त आकल्पं रौरवं व्रजेत्॥

इत्यादि तु यदि प्रामाणिकं तदा प्रयागमायापुरीकाश्यादितीर्थ समीपस्थगङ्गापरमित्याहुः।

यत्त्वत्रत्यसर्वतीर्थशब्दो बहुव्रीहिणा रूढ्या च प्रयागमात्रपरोऽतस्तत्रैवोपवासवपने इति तन्न बहुवचनानुपपत्तेः। देवप्रयागादिषु न बहुव्रीह्यर्थ इति न तान्यादाय बहुवचनोपपत्तिः। किञ्चैतत्समानाकरं वचनमग्निवायुपुराणयोर्गयाप्रकरणे, स्कान्दे च प्रभास (प्रयाग) प्रकरणे पठ्यतेऽतो न प्रयागमात्रपरता। मात्स्ये—

अन्ये च बहवस्तीर्थाः सर्वपापहराः शुभाः।
तस्मात्कुरुष्व कौन्तेय सर्वतीर्थाभिषेचनम्॥

इति प्रयागप्रकरणे पाठस्तत्र रूढेरसम्भवाच्च (श्च)।

'प्रयागं सर्वतीर्थेभ्यः प्रवदन्त्यधिकं विभो'॥

इति भारतविरोधाच्च।

अपि च विशालादिपर्युदासानुपपत्तिस्तस्य प्रयागपरत्वे प्राप्त्यभावेनपर्युदासानौचित्यात्। दोषाधिक्यपरता तु वाक्यार्थानुपपत्तेरसम्भवदुक्तिका सामान्यनिषेधेनैव सिद्धेः विशेषनिषेधस्य हि तदाधिक्यपरता दृष्टा। 'गङ्गायां भास्करक्षेत्रे' इत्यादिवाक्ये गङ्गापदं च तीर्थमात्रोपलक्षणं 'विना तीर्थं विना यज्ञम्' इत्यादिवक्ष्यमाणवाक्यात्।

एतेनानेन नियमेनान्यत्र प्राप्त्यभावाद्वर्जयित्वा गयामित्यादि व्यर्थमित्यपास्तम्।

तत्र वाक्ये कुरुक्षेत्रपदेन काश्यपि वक्ष्यमाणश्रुत्यादिस्वरसादित्यन्ये (न्यत्)।

यदपि—

गयायां भास्करक्षेत्रे मातापित्रोर्मृतौ गुरोः।
आधाने सोमपाने च वपनं सप्तसु स्मृतम्॥

इतिवाक्ये भास्करक्षेत्रपदेन प्रयागमुक्त्वा तदवच्छिन्नगङ्गायां मुण्डनमिति आचक्षते—तदपि न प्रयागस्य प्रजापतिक्षेत्रत्वात्। 'प्रजापतेरिदं क्षेत्रं प्रयागमिति विश्रुतम्' इति मात्स्यात्, 'एतत् प्रजापतिक्षेत्रं त्रिषु लोकेषु विश्रुतम्' इति प्रयागमुपक्रम्य कौर्माच्च। 'तत्र यः सवितुः क्षेत्रे प्राणांस्त्यजति मानवः। स सूर्य्यलोकमवाप्नोति' इत्यादिना तदन्तर्गतकोणादित्यादेरेव भास्करक्षेत्रत्वप्रतीतेश्च। तत्र प्रयागे सप्तस्वित्युपात्तसंख्याविरोधाच्च।

इमौ च मुण्डनोपवासौ काम्यौ—

तीर्थेषु वपनं धन्यमुपवासश्च स्वर्गदः।
दानमक्षय्यमुदितं जन्ममृत्युजरापहम्।

इति ब्राह्मात्। अत एव बहुषु तीर्थेषु तदनाचारोऽपि शिष्टानाम्।

उदकं शोणितं दद्यात् पिण्डं दद्यादमेध्यवत्।
नोपतिष्ठति तत्सर्वं यो विना मुण्डितं शिरः॥

इत्यादि यदि प्रामाणिकं तदा तत्प्राशस्त्यपरं बोध्यम्।

संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि॥
मुण्डनं चोपवासं च ततो यत्नेन कारयेत्॥

इत्यभियुक्ताः। यत्नेनेत्यस्य सत्यां तत्फलकामनायामित्यादिः। फलं च मुण्डनमन्त्रे स्पष्टमेव। तत्र वपनं कारयिष्ये इति संकल्पः।

वपाम्यहमितिमन्त्रे ऽन्तर्भावितण्यर्थो वपतिरिति बहवः। वपनं करिष्य इति सङ्कल्पोऽपि तादृशएवेत्यन्ये। तत्रादौ श्मश्रुकूर्चयोर्वपनं ततः केशानामित्युचितम्। तत्र तीर्थे दक्षिणभागमारभ्य मुण्डनम्। पित्रादिमृतौ तु वामभागमारभ्य उदङ्मुखः प्राङ्मुखो वा वापयेत्। प्रायश्चित्तार्थे सशिखं वपनम्।

'यतिः शूद्रश्च विधवा सशिखं वपनं चरेत्' तत्र यतयः ऋतुसन्धिभिन्नकाले तीर्थप्राप्तावपि न वपन्तीति तदाचारः। आहिताग्नयस्तु पर्वभिन्नेऽपि काले तीर्थप्राप्तौ वपन्ति पित्रादिमरणे निमित्ते यथा तद्वत्। सधवानां प्रयागादितीर्थेषु द्व्यङ्गुलच्छेद एव मुण्डनम्।

सर्वान्केशान् समुद्धृत्य छेदयेदङ्गुलद्वयम्।
एवमेव तु नारीणां मुण्डमुण्डनमादिशेत्॥

इति प्रायश्चित्तप्रकरणपठितस्मृत्युत्तरार्धेन यत्र यत्र वैधं मुण्डनं प्राप्नोति तत्र सधवानामेवमेवेत्यर्थकेनान्यत्रापि तथैवेति बोधनात्। सर्वान् केशानित्याद्युक्त्वा 'तीर्थादिषु सभर्तॄणां स्यादेवं केशवापनम्'इति दिवोदासीये उक्तेश्च। 'केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम्' इत्यनेन तु न विरोधः। वचनात्तावच्छेदेनैव मूलगपापनाशकल्पनात्। यद्वा तद्बलाच्छिरःपृष्ठभागे मूले एव द्व्यङ्गुलमितदेशे मुण्डनं तासाम् तच्च क्षुरेणैव। आधानप्रकरणे आपस्तम्बोऽपि एवम् पत्नीकेशवर्जमिति पठति। रामयुधिष्ठिरभरततत्पत्न्यादीनां मुण्डनाश्रवणात् क्षत्रियाणां तदनधिकारं वदन्ति॥

केचित्तु—

राजा कुमारी नारी च जीवतश्च पितुः सुतः।
मुण्डनं सर्वतीर्थेषु न कुर्याद् गर्भिणीपतिः॥

इति पठन्ति। तन्निर्मूलम्—

विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना।
यो वापयति लोमानि सपुत्रः पितृघातकः॥ इत्युक्तेरित्यन्ये।

एवं च सधवानां प्रयागे सर्वमुण्डनेऽन्यत्र तीर्थे द्व्यङ्गुलच्छेद-स्याप्यकरणे भ्रम आचारो वा मूलम् (१)।

क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम्।
पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके॥

इतिस्मृतेर्ज्योतिःशास्त्रादिनिषिद्धकालेऽपि मुण्डनम्। गङ्गातीरे मुण्डनं तथा कार्यम् यथा वायुना केशादि तीर्थे पतति। विष्णु-पादाङ्गुष्ठविनिर्गतजलस्य हि तन्माहात्म्यं यत्र केवलमभिसन्धिपूर्वकं स्नानाद्युपभोगेषूपकारकं किन्त्वनभिसंहितमपि अपेतप्राणस्याप्यस्थि-चर्मस्नायुकेशाद्युत्सृष्टं स्वशरीरजं सद्यः (२) प्राणिनं स्वर्गं नयतीति विष्णुपुराणात् स्वयमपि मृतास्थ्यादिवद्गङ्गाजले प्रक्षेप्तव्यम्। तुषकेश-पुरीषभस्मास्थिश्लेष्मनखलोमान्यप्सु न क्षिपेदिति शङ्खोक्तनिषेधस्तु जलान्तरपर इत्यन्ये॥

तीर्थस्नानकालः—

प्रत्यावृत्तोदके रजोयोगे च स्नानं गङ्गातिरिक्तनद्यां दुष्टम्। आकस्मिकतीर्थप्राप्तौ तत्र रात्रावपि स्नानम्, बुद्धिपूर्वं तु रात्रौ तीर्थे न प्रवेष्टव्यम्। गङ्गायां त्विदं निर्विवादम्—

भुक्त्वा वा यदि वाऽभुक्त्वा दिवा वा यदि वा निशि।
न कालनियमः कश्चिद् गङ्गां प्राप्य सरिद्वराम्॥

इति भारतात्।

---

(१) तत्र प्रयागे नोन्मुक्तकेशवपनं किन्तु वेणीं कृत्वा कुङ्कुमादिद्रव्यालङ्कृता भर्तारं नमस्कृत्य तदनुज्ञाता वापयेत् तां च वेणीमञ्जलौ निधाय तत्र यथाशक्ति कृतां स्वर्णमयीं वा वेणीं मुक्ताप्रवालादि च निधाय 'वेण्यां वेणीप्रदानेन सर्वं पापं प्रणश्यतु। जन्मान्तरेष्वपि सदा सौभाग्यं मम वर्तताम्॥' इत्युक्त्वा वेणीं क्षिपेत् एतच्च प्रथमयात्रायामेव न प्रतियात्र-मिति सर्वशिष्टानामाचार इति प्रयागसेतौ नारायणभट्टाः।

(२) 'शरीरिणं' क. पा.।

मातरं पितरं जायां भ्रातरं सुहृदं गुरुम् ।
यमुद्दिश्य निमज्जेत अष्टमांशं लभेत सः ॥

इतिमार्कण्डेयपुराणे । दशमांशमित्यन्यत्र पाठः ।

प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ।
मज्जयेच्च यमुद्दिश्य सोऽष्टभागं फलं लभेत् ॥
कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः स्वयम् ।
त्वयि स्नाते स च स्नातो यस्येदं ग्रन्थिबन्धनम् ॥

इतिमन्त्रलिङ्गात् । तद्ग्रन्थिबन्धनमेव तत्प्रतिकृतिर्बोध्या (३) । इदं च जीवदजीवत्सर्वविषयम् ।

तर्पणश्राद्धविधी—

स्नानोत्तरं तर्पणश्राद्धे । ते च-

अकालेऽप्यथवा काले तीर्थे श्राद्धं च तर्पणम् ।
अविलम्बेन कर्त्तव्यम् नैव विघ्नं समाचरेत् ॥

इति स्कान्दे ।

सर्वपितृतर्पणानन्तरम् ।

आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥
कामोदकप्रदानं ते मयैतत्कथितं नृप ।
यद्दत्त्वा प्रीणयत्येव मनुष्यः सकलं जगत् ॥

इत्युक्तेरिदमपि कार्यम् । येषां शाखिनां श्राद्धाङ्गं तर्पणमस्ति तैस्तद्धेमश्राद्धपक्षे विप्रविसर्जनानन्तरं कार्यम् ।

---

(३) सा च सप्तभिः कुशैः कार्या 'सप्तभिस्तु प्रकुर्वीत कुशैः प्रतिकृतिं नरः । यमुद्दिश्य निमज्जेत सोऽष्टमांशं फलं लभेत्' । इति स्मृत्यन्तरात् ।

पक्षश्राद्धे हिरण्ये चाप्यनुव्रज्य तिलोदकम्।

इत्युक्तेः।

तर्पणक्रमस्तु—

तातास्बा त्रितयं सपत्नजननी मातामहादित्रयं
सस्त्रि स्त्रीतनयादितातजननीस्वभ्रातरस्तत्स्त्रियः।
तातास्बात्मभगिन्यपत्यधवयुक् जाया पिता सद्गुरुः
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे॥

इत्यभियुक्तोक्तः। अत्र सस्त्रीत्युक्तया सपत्नीकं मातामहमित्यादिवाक्यमुच्चारयन्ति दाक्षिणात्याः। (तद्भ्रान्त्या) अतएवाग्रे तत्स्त्रिय इति पाठः। अत्र प्रत्यञ्जलि मन्त्रावृत्तिरुचिता। सकृदेव मन्त्रपाठोऽञ्जलित्रयदानं चेति काश्चित्।

तीर्थे तिलतर्पणञ्च रविभौमशुक्रनन्दासप्तमीत्रयोदशीमघाजन्मदिनगृहशनिषु विवाहे वर्ज्यम्, उपनयनेऽर्धवर्षम्, चौले तदर्धं वृद्धिश्राद्धे मासमित्येवं निषिद्धेष्वपि कालेषु कार्यम्। विधवायाः पुत्राद्यभावे प्रत्यहमेव तीर्थेऽपि तर्पणं कार्यम्। तीर्थश्राद्धं महाफलम् पुष्करादीन्यनुक्रम्य 'एषु तीर्थेषु यच्छ्राद्धं तत्कोटिगुणमिष्यते' इति मात्स्यादिभ्यः। तच्च स्नानतर्पणानन्तरमविलम्बेन कार्यम्। रात्र्यादौ कृतभोजनेनापि तीर्थश्राद्धं कार्यमेव। निषिद्धकाले सायाह्नादौ तन्न कार्यमति शूलपाणिः।

ततः सायाह्नदत्तं हि राक्षसैर्विप्रलुप्यते।
ग्रहोपरागसंक्रान्तितीर्थश्राद्धादिकं विना॥

इति विष्णूक्तेस्तदयुक्तमित्यन्ये। एतच्चाकस्मिकतीर्थप्राप्तौ द्रष्टव्यम्। बुद्धिपूर्वं त्वनिषिद्धकाल एव तीर्थप्रवेशः कार्यः। यदा तु प्राप्तिदिने दैवमानुषविघ्नेन प्रतिबन्धस्तदा दिनान्तरे कार्यम्। यदा तु तेन विघ्नेनाकृतश्राद्ध एव बहिर्याति तदा तल्लोप एव। एष एव

न्यायो मुण्डनेऽपि नैमित्तिकत्वेन साम्यात्। अत एव मलमासेऽप्येतच्छ्राद्धम्। तत्र रात्रादावामश्राद्धं हेमश्राद्धं वा। अन्नश्राद्धं रात्र्यादौ भुक्तवतश्च तीर्थप्राप्तौ परदिने एव। 'तथा ब्राह्मणं न परीक्षेत तीर्थे कालं न चिन्तयेदिति' पाद्मे। पातित्यादिदोषदुष्टस्तु त्याज्य एव। तीर्थनिमित्ते श्राद्धे ऽर्घ्यावाहनद्विजाङ्गुष्ठनिवेशतृप्तिप्रश्नविकिरदिग्बन्धाग्नौकरणानि न कार्याणि। तत्र तीर्थजलसमीपे आमहेमान्यतरश्राद्धमेव, गृहादौ तु पक्वान्नेन। पाकब्राह्मणासम्भवे गृहेऽप्यामम्, तदसम्भवे हैमम्। 'सदैव तु जलान्तेषु आमश्राद्धं प्रशस्यत' इत्युक्तेः। तत्रामं चतुर्गुणं द्विगुणं वा अशक्तौ सममपि। हिरण्यं त्वष्टगुणं चतुर्गुणं द्विगुणं वा अशक्तौ ब्राह्मणभोजनसममपि। शूद्रस्य तु सर्वत्रामेनैव। आमश्राद्धे तृप्तिप्रश्नोऽङ्गुष्ठनिवेशो जुषप्रश्नो यथासुखमिति अपोशनं च न भवति, हैमश्राद्धे पिण्डदानं कृताकृतम्। विप्रालाभे तु-

पात्राभावेऽखिलं कृत्वा पितृयज्ञविधिं नरः (१)।
निर्दिश्याशनमुद्धृत्य यत्र पात्रं ततो गतिः॥
निधायैवं दर्भवटूनासनेषु समाहितः।
प्रैषानुप्रैषसंबद्धं (२) विधानं प्रतिपादयेत्।
तदन्नं च क्षिपेदग्नौ गवे दद्यादथाप्सु वा॥
नैव प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषतः॥ इति देवलः॥

आमादिश्राद्धे तु तदामादि कालान्तरे ब्राह्मणाय देयम्। आमादिश्राद्धं सति सम्भवे पूर्वाह्ण एव आकस्मिके तु तीर्थप्रवेशे रात्र्यादावपि सर्वथा श्राद्धाशक्तौ सक्तुसंयावपायसपिण्याकाद्यन्यतमेन पिण्डदानमात्रं तीर्थे। तत्राप्यशक्तौ तिलतर्पणमुपवासो वा। तीर्थश्राद्धे पिण्डानां जले एव प्रक्षेपः। यत्र काश्यादावेकस्मिन्महातीर्थे ऽवान्तर-

(१) पात्राभावे खिलां कृत्वा पितृयज्ञचितिं नरः इति ख. पाठः।

(२) सहितं निधानं ख. पा.।

तीर्थान्यनेकान्येकदिने गम्यन्ते तत्र सकलनिमित्तकं श्राद्धं तन्त्रेण कारयिष्ये इतिसङ्कल्पः (३)। व्यापकतीर्थस्यैव सङ्कल्पे उद्देश इत्यन्ये। पञ्चक्रोशसीमायां स्थितौ तु काशीमात्रनिमित्तकं तत्रैवोचितम्। तैर्थिकवार्षिकयोरेकदिने प्राप्तौ तैर्थिकं कृत्वा वार्षिकं कार्यम्। दार्शिकानि (४) प्रसङ्गात्सिध्यन्ति। यदि तीर्थे आमश्राद्धादि तदा तानि पृथक् कार्याणि। तेषां पक्वान्नसाध्यत्वात्। यदि तान्यपि अशक्त्यादिना ऽऽमेनैव चिकीर्षति तदा प्रसङ्गात्सिद्धिः। मुण्डनवच्छ्राद्धमपि दशमासोत्तरं तीर्थप्राप्तावेवाचारात्।

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः॥

इत्युक्ते जीवित्पितुरपि तीर्थे श्राद्धे (५) अधिकारः। अत्र पितृपितामात्रादयस्तन्मातामहादयश्च देवताः। स्वमाताऽपि पितृपत्नीत्वेन देवता स्वमातामहोऽपि पितृश्वसुरत्वेनैव। मृतमातृकेण प्रसङ्गाद् गयागमने मातृपार्वणमेव कार्यम् न पितृपित्रादिश्राद्धम्।

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम्।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम्॥

इति निषेधात् न तु तच्छ्राद्धोद्देशेन गयागमनं कार्यम्। 'गयां प्रसङ्गतो गत्वा मातुः श्राद्धं समाचरेत्' इत्युक्तेः॥

केचित्तु तस्य गयायामुभयमिच्छन्ति। अचाराद्व्यवस्था। एवञ्च पितरि तीर्थवासिनि देशान्तरादागतेन पुत्रेण श्राद्धं कार्यमेव पित्रा सहगतस्यापि तदावश्यकमेव लोकविद्विष्टत्वात् तदनाचारः। यस्य तु पित्रादित्रयं जीवति स नैव कुर्यात्। विधवा तु यदि पुत्रवती तीर्थं गता तदा श्राद्धतर्पणे न कुर्यात्।

(३) करिष्ये इति ख. पा.। (४) दर्शिकादीनि ख पा। (५) श्राद्धेऽपि क. पा.

यत्तु पुत्रवत्यापि पुत्रासंनिधाने ब्राह्मणद्वारा सङ्कल्पश्राद्धं कार्य-मिति तन्निर्मूलम् ।

अपुत्रया तु कार्यमेव तादृश्या स्त्रियानुपनीतेन च यथाचारं विप्रद्वारा कारणीयम् अमन्त्रकं वा नामगोत्राभ्यां स्वयंकार्यम् । देवेभ्यो नमः पितृभ्यः स्वधा नम इति मन्त्राभ्यां वा । रिक्थहारी तत्स्वामिनः श्राद्धं कुर्यात् । यतिपतितादीनां तु श्राद्धे नाधिकारः । श्राद्धं च गयातिरिक्ततीर्थे षड्दैवत्यमेव । मातृमातामह्यादिपार्वणं पितृव्यादेरेकोद्दिष्टं च कृताकृतम् । यदा मात्रादिभ्यो देयं तदा पितुः पश्चिमभागे । मात्रादीनां पृथक्श्राद्धपक्षे तासां कृतसहग-मनत्वे उभयोद्देशेन ब्राह्मण एक एव पिण्डोऽप्येक एव मृताहे मृततिथ्येकत्वे पूर्ववत्संक्षेपेणैव श्राद्धम् । तिथिभेदे तु पृथगेव नवश्राद्धं तु पृथगेव दर्शादिष्वपि संक्षेपेणैव । अनेकमातृकत्वेऽर्घ्याः पृथक्, पिण्डस्तु सर्वासामेक एव । महालयेऽप्येवम् ।

अन्ये तु पिण्डपृथक्त्वमपीच्छन्ति । सापत्नमातामहादि तत्पत्नीनां पितृपितामहसपत्नमात्रोः पितृव्यतत्सुताचार्यगुरुशिष्यसखिमातुलादि ज्ञातितत्पत्नीदौहित्रपुत्रतत्पत्नीकनिष्ठसोदराणां स्ववंश्यसंततियतिब्र-ह्मचार्यादीनां चेच्छन्ति । तत्र पितृव्यादीनामेकोद्दिष्टमेव । तत्र पितृमाता-महपार्वणमावश्यकम् । अन्यत्तु न तथा गयायां तु सर्वमप्यावश्यकम् ।

अनेकपार्वणानामेकोद्दिष्टानां च युगपत्प्राप्तौ तन्त्रेण श्रपणं, दैवं च तन्त्रेण पार्वणोत्तरं चैकोद्दिष्टम् अशक्तौ तु पार्वणैकोद्दिष्टयोरपि तन्त्रम् तीर्थे एक ब्राह्मणेऽपि सर्वैकोद्दिष्टान्यशक्तौ, पिण्डास्तु पृथगेव-पित्रादिपार्वणेष्वप्येक एव ब्राह्मणोऽशक्तौ । यस्तु दानादिना प्रेरितो-ऽन्यार्थं तीर्थं याति स प्रथमं यजमानपित्रादेः श्राद्धं दत्वा स्वपितृ-भ्योऽपि दद्यात् । विधवा तु स्वभर्तृपार्वणं स्वपितृपार्वणं च कुर्यात् । क्षयाहे तु तस्या भर्त्रैकोद्दिष्टमेव । श्वशुरे जीवति भर्तृतत्पितामह-

प्रपितामहेभ्यो दद्यात्। उभयोर्जीवतोर्भर्त्तृ तत्प्रपितामहवृद्धप्रपितामहेभ्यः स्वपितरि जीवति द्वारलोपात्तत्पार्वणलोप एव श्वश्रू मातामहयोः स्वमातुर्मातामह्याश्च पार्वणं कृताकृतम्।

यत्तु पितृमातामहादीनां सपत्नीकानामित्युच्चारणेन श्राद्धमिति तन्न विनापि तदुल्लेखं तदनुयायितया तच्छ्राद्धेन तासामपि तृप्तेः।

स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते सुधासमम्।

इति देवलात्। स्वेन भर्त्रा समं भर्त्तुर्दीयमानं मातापि भुङ्क्ते इति तदर्थः। एवञ्च मातृमातामह्यादिश्राद्धमनावश्यकमेव।

जीवत्पितृकविषये विष्णुः 'पितरि जीवति यः श्राद्धं कुर्याद्येषां पिता कुर्यात्तेषां कुर्यात्। पितरि पितामहे च जीवति येषां पितामहः। त्रिषु जीवत्सु नैव कुर्यात्। यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात्। यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डं दत्त्वा पितामहपितामहाय दद्यात्। यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहात्पराभ्यां द्वाभ्यां दद्यात्। यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात्। मातामहानामप्येवमिति। अत्र यत्तच्छब्दाभ्यां पितृसंबद्धा एव मात्राद्यो मातामहाश्च पितृमातृत्वादिना जीवत्पितृकस्य तीर्थश्राद्धादौ देवताः स्वमातुः स्वमातामहस्य च पितृपत्नीत्वेन स्वश्वशुरत्वेन च देवतात्वम् तदप्येकोद्दिष्टमेव। पितुस्तस्यैव प्राप्तेर्यस्य पिता प्रेतः स्यादित्यादि मृतपितृकविषयमिति स्पष्टमेव। तद्विषय एव मातामहानामप्येवमित्यतिदेशः। यस्य पितामह इत्यादेर्जीवत्पितृकविषयत्वेऽपि तद्विषये नातिदेशस्तस्य मातामहत्वेन स्वमातामहाप्राप्तेः।

न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः॥
येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः॥

इति तु पिण्डपितृयज्ञविधिं विना श्राद्धनिषेधपरमिति केचित्।

अन्ये त्वेतद्वलाच्छ्रौतस्मार्ताभयाग्निरहितस्य जीवत्पितृकस्य श्राद्धे ऽनधिकार एव अग्निहीनस्य पिण्डपितृयज्ञविधानेन श्राद्धाप्राप्तेस्त-द्वैयर्थ्यापत्तेरित्याहुः।

यदा जीवत्पितृकोऽपि पितृनियुक्तस्तत्फलार्थमेव तीर्थं याति तदा यजमानस्य पितुरित्यादिवाक्यरचनया प्रथमं श्राद्धं कृत्वा स्वस्यापि प्रसङ्गतस्तीर्थप्राप्तिनिमित्तत्वात् पितुः पित्रादीनामिति वाक्यरचनया श्राद्धान्तरमपि कार्यम्। एवं यदा मृतमातृकः पितृप्रेर-णया तत्फलार्थं गयां याति तदा तेन प्रथमं यजमानपत्नीत्वेन मात्रे एकोद्दिष्टं कृत्वा पितृपत्नीत्वेनैकोद्दिष्टं कार्यम्। ततो मातृपार्वणमपि-कार्यम्। प्रसङ्गात्तस्य गयालाभे पितृपत्नीत्वेनैकोद्दिष्टं कृत्वा मातृत्वा-दिना मातृमात्रपार्वणमपि कार्यम्। गयाभिन्नतीर्थे तु यथायोगं यजमानपत्नीत्वेन पितृपत्नीत्वेन चैकोद्दिष्टमेव कार्यम् न तु पार्वणम्। अन्येतु जीवत्पितृकस्य गयायां श्राद्धनिषेधात्पितपितृत्वाद्विना श्राद्ध नास्त्येवेत्याहुः। मातरि मातामहे मातामह्यां वा जीवन्त्यां तत्तत्पार्वणलोप एव। विस्तरेण श्राद्धकरणाशक्तौ पित्रादीन्सर्वानुद्दि-श्यैकः पिण्डो देय इति केचित्। तीर्थे मृतास्थिप्रक्षेपो मृतस्य स्वर्गदः गङ्गायां ब्रह्मलोकद इत्यन्यत्र विस्तरः।

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम्।
प्रथमेऽब्दे न कुर्वीत यदि न स्यात् सपिण्डनम्॥
कृतेऽपि तु सपिण्डने इति कश्चित्पठति।
प्रथमेऽब्देऽपि कुर्वीत कृतं यस्यौर्ध्वदेहिकम्॥

इत्यन्यत्र पूर्वार्धंतुसमम्। यदि स्याद्वार्षिकमान्सुत इति त्वर्यपाकमन्ये पठन्ति। दशाहाभ्यन्तरेऽस्थिप्रक्षेपस्तु प्रशस्ततरः देवदर्शने प्रणामे च—

अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः।
वामभागे भवेन्नाशो दक्षिणे सर्वकामदः॥

शिवे त्वग्रेऽपि (१)-

येषु तीर्थेषु ये देवा येषु तीर्थेषु ये द्विजाः।
येषु तीर्थेषु यत्तोयं विचिकित्सेन्न तत्र तत् ॥

इति ब्राह्मे।

एतेषूपहतेष्वपि न दोष इत्याशयः।

यदन्यत्र कृतं पापं तीर्थे तद्याति सर्वथा।
न तीर्थकृतमन्यत्र क्वचित्पापं व्यपोहति ॥

इति पाद्मे।

गारुडेऽपि-

गृहे तु यत्कृतं पापं तीर्थस्नानेन शुध्यति।
कुरुते तत्र यत्पापं वज्रलेपसमं हि तत् ॥ इति

ब्रह्मवैवर्त्तेऽपि—

अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति।
पुण्यक्षेत्रे कृतं पापं गङ्गातीरे विनश्यति ॥
गङ्गातीरे कृतं पापं वाराणस्यां विनश्यति।
वाराणस्यां कृतं पापमविमुक्ते विनश्यति ॥
अविमुक्ते कृतं पापमन्तर्गेहे विनश्यति।
अन्तर्गेहे कृतं पापं वज्रलेपो भविष्यति ॥
वज्रलेपच्छिदं ह्येतत्पञ्चक्रोशप्रदक्षिणम् । इति।

अत्र गङ्गातीरं वाराणस्यनवच्छिन्नम्। एवञ्च काशी सर्वतीर्थकृतपापनाशिका दर्शनमात्रेण।

अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति।
पुण्यक्षेत्रे कृतं पापं वाराणस्यां विनश्यति ॥

---

(१) इदं पुस्तकद्वये दृश्यमानमपि अनन्वितम्।

वाराणस्यां कृतं पापं गङ्गातीरे विनश्यति ।
गङ्गातीरे कृतं पापमन्तर्गेहे विनश्यति ॥
अन्तर्गेहे कृतं पापं वज्रलेपो भविष्यति ।

इत्यन्यत्रोक्तेः ।

अत्र गङ्गातीरे कृतं पापं गङ्गास्नानेन शुध्यति ॥ इति भविष्या-द्युक्तेरिदमन्तर्गृहस्तुत्यर्थम् । गङ्गेतिकीर्त्तनं च तन्नाशकम् ।

गङ्गागङ्गेतियन्नाम योजनानां शतैरपि ॥
स्थितैरुच्चारितं हन्ति पापं जन्मत्रयार्जितम् ॥

इति विष्णुपुराणाच्च ।

अन्तर्गृहे कृतानां पापानामपि पञ्चकोशीयात्रा प्रायश्चित्तम् ।

ज्ञानस्वरूपा काशीयं पञ्चकोशीपरीमिता ।
तस्याः प्रदक्षिणं कृत्वा सर्वपापैः प्रमुच्यते ।
क्षेत्रे कृतानां पापानां प्रायश्चित्तं न चेतरत् ।

इतिब्रह्मवैवर्तात् ।

अल्पव्ययायाससाध्याया अपि तस्या वस्तुमाहात्म्यात्सर्वपाप-नाशकत्वं नानुपपन्नम् ।

एतेन पञ्चकोशीयात्रायां पञ्च प्राजापत्यानि कल्पयन्तः परास्ताः । धनिकानामेतत्सहितं गृहदानं सर्वप्रायश्चित्तम् ।

वाराणस्यां गृहं कृत्वा ब्राह्मणाय प्रयच्छति ।
काश्यां कृतानां पापानां कायवाङ्मनसां खलु ।
नाशः परोऽयं संदिष्टः शुभकृद्यदि लभ्यते ।

इति तत्रैवोक्तेः ।

काश्यां जलाशयकरणं जीर्णजलाशयोद्धारश्चात्यन्तं पापनाशाय पुण्याय चेत्यपि तत्रैव । पङ्ग्वादीनां केवलं गृहदानमपि सर्वप्राय-श्चित्तमित्यपि तत्रैव । एवं गङ्गास्नानविष्णुस्मरणे तद्भक्तानां सर्वप्रा-

यश्चित्तम्। न च तत्साधारणं, तावता क्षत्यभावात्। न चेतरदित्या-द्युक्तिस्तु तयोर्भक्त्यभाववत्पुरुषपरा। मन्त्राद्युक्तप्रायश्चित्तानां तद्विषयताया एवाभियुक्तैरुक्तत्वात्।

विष्णुस्मरणमुपक्रम्य—

प्रायेण वेद तदिदं न महाजनोऽयं
देव्या विमोहितमतिर्बत माययाऽलम्।
त्रय्या जडीकृतमतिर्मधुपुष्पितायां
वैतानिके महति कर्मणि युज्यमानः॥

इति भागवताच्च।

महाजनो मन्वादिः। न वेद विष्णुस्मरणस्य सर्वप्रायश्चित्तत्वं न वेदेत्यर्थः। तत्र हेतुर्मायाविमोहितत्वम्। यद्वा महाजनो लोकः। त्रय्यां जडीकृतमतिः सन् बहुवित्तव्ययायाससाध्यत्वेन महति वैतानिके कर्मणि युज्यमानः श्रद्धालुर्न तु विष्णुस्मरणादावतः श्रद्धा-भावात्तान्प्रतीदं नोक्तवानिति तदर्थः। तथा सन्निकर्षोऽत्र मर्त्या-नामनादरणकारणम्। 'गाङ्गं हित्वा यथाऽन्याम्भस्तत्र त्वायाति शुद्धये' इति भागवते उक्तम्।

भविष्ये—

स्नानमात्रेण गङ्गायां पापं ब्रह्मवधोद्भवम्॥
दुराधर्षं कथं याति चिन्तयेद्यो वदेदपि॥
तस्याहं प्रदहे पापं कोटिब्रह्मवधोद्भवम्॥
स्तुतिवादमिमं मत्वा कुम्भीपाकेषु जायते॥
आकल्पं नरकं भुक्त्वा ततो जायेत गर्दभः॥
तीर्थमन्यत्प्रशंसन्ति गङ्गातीरस्थिता अपि॥
पण्डितंमन्यमाना ये ते वै निरयगामिनः॥ इति।

कालिकापुराणे-

गङ्गामप्राप्यापि ये मर्त्याः शुद्धां भक्तिं न कुर्वते ॥
तीर्थान्तरे रतिं कुर्युस्ते वै निरयगामिनः ॥
सर्वोत्तमां महादेवीं सर्वोत्कृष्टां वरप्रदाम् ॥
अन्यतीर्थसमां ब्रूयुस्ते वै निरयगामिनः ॥

वरः श्रेष्ठो मोक्षः ।

स्कान्दे-

गङ्गातीर्थम्परित्यज्य येऽन्यतीर्थाभिलाषुकाः ॥
ब्रह्महत्याफलं तेषां सततं संशयात्मनाम् ॥ इति ।

मनुदेवलौ ॥

क्षेत्रस्थ उद्धृतं वापि शीतमुष्णमथापि वा ॥
गाङ्गं तु हरते तोयं पापमामरणान्तिकम् ॥ इति ।

अनेकजन्मार्जितमपीति शेषः ।

लैङ्गे-

ब्रह्महा गुरुहा गोघ्नः स्वर्णहृद् गुरुतल्पगः ।
गङ्गाम्भसा तु पूयन्ते नात्र कार्या विचारणा ॥ इति ।

सकलप्रायश्चित्तपथाऽतीतानां गङ्गाजलस्पृष्टभस्मनां सगर-पुत्राणां समुद्धारस्य रामायणेषु सर्वपुराणेषु च श्रवणाच्च ।

योगियाज्ञवल्क्यः-

न तावत् पापमस्तीह यन्नाम्ना न हृतं हरेः ।
अतिरेकभयादाहुः प्रायश्चित्तान्तरं वृथा ॥ इति ।

च्यवनः-

श्रुतिस्मृतिपुराणेषु रामनाम समीरितम् ॥
सर्वेषामेव पापानां प्रायश्चित्तमिदं स्मृतम् ॥ इति ।

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

इति पाद्मादौ ॥

अपवित्रः आचरितपापकर्मा पवित्रः अतादृशोऽनाचरितस्नानादिः, सर्वावस्था विष्णोरभक्तिकावस्था । स्मरणं च विष्णुः सर्वकारणम् स अहमपि इति ज्ञानम् ।

पराशरादिसंहितासु—

अर्थवादं हरेर्नाम्नि सम्भावयति यो जनः ॥
स पापिष्ठो मनुष्याणां निरये पतति स्फुटम् ॥ इति ।

विष्णुपुराणेऽपि—

कलिकल्मषमत्युग्रनरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्यत्रानुसंस्मृते ॥
स सर्वः सर्ववित्सर्वस्वरूपो रूपवर्जितः ।
सर्वभूतश्च सर्वात्मा कीर्त्यतां भगवान्हरिः ॥ इति ।

किञ्च 'न युष्मे वाजबन्धवो निनित्सुश्च न मर्त्यः अवद्यमधिदीधरत्' इति मन्त्रोऽपि महतां नामकीर्त्तनस्य पापनाशकत्वमाह । तथा हि वाजमित्यन्ननाम अन्नदानेन ये सर्वबन्धवस्तेषां संबोधनं हे वाजबन्धवः युष्मे युष्मासु अधिः सप्तम्यर्थानुवादः । समासस्तु बाहुलकान्न । निनित्सुश्च न निन्दनेच्छशीलोऽपि मर्त्यः अवद्यं पापं न धारयति । भवदनुसन्धानमात्रेण निष्पापत्वात् । निनित्सुरपीत्युक्त्या निन्दन् अपि किमुत स्तुवन्निति गम्यते । तावपि पुण्यश्लोकनाम गृणन्तौ शुद्धौ नितरां स्त इति तदर्थः । अन्नाश्वमेधनाम्नो राज्ञो दानस्तुतिरियम् । एवञ्च जगत्पालकस्य भगवतो नामकीर्त्तनं सर्वपापनाशकमिति कैमुतिकन्यायसिद्धम् ।

अपि च 'तमुस्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषा पिपर्तन अस्य जानन्तो नामचिद्विविक्तन महस्ते विष्णो सुमतिं भजामहे'

इति मन्त्रोऽपि भगवन्नामकीर्त्तनस्य ज्ञानप्रदत्वमाह । अस्यार्थः— उ इति छन्दःपूरणाय। हे जानन्तः-कुशलाः तं देवम्—अस्ति कश्चिदीश्वर इत्याबालप्रसिद्धम् । पूर्व्यं पुरातनं सर्वकारणं ऋतस्य वेदस्य गर्भं सकलवेदप्रतिपाद्यं स्तोतारः स्तुध्वमिति प्रत्ययविपरिणामः यथाविदो यथाविदन्ति तथा स्तुध्वमिति श्रौतपौराणतान्त्रिकपौरुषेयशब्दैः तत्स्तुतिप्रतिपादकैर्यथाज्ञानं स्तुध्वमित्यर्थः । भागवते- स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपीत्युक्तेः । एवं सति जनुषा जन्मना पिपर्तन तनश्छान्दसः। पिपृत जन्मानि समापयत मुक्तिप्राप्त्येत्यर्थः । यद्येवं स्तोतुमसमर्थास्तर्ह्यस्य विष्णोर्नामचित् नामापि विविक्तन सदा कीर्त्तयत । कीर्तनफलमाह-हे विष्णो ते महः महसः प्रकाशस्वरूपस्य प्रकाशिकामपीतिशेषः। सुमतिं भजामहे लकारव्यत्ययः। एवञ्च तत्त्वज्ञानमाशासाना: कीर्त्तयतेत्यर्थः।

विधिशक्तिर्न मन्त्रस्य वियोगेनापनीयते ॥
स्वतो विधास्यति ह्येष नियोगात्स्मारयिष्यति ॥ इति भट्टाः ।

तापनीयेऽपि—

तान्प्रजापतिरब्रवीदेभिर्मन्त्रैः स्तुध्वं ततो देवः प्रीतो भवति स्वात्मानं दर्शयति तस्माद्य एतैर्मन्त्रैः स्तौति सोऽमृतत्वञ्च गच्छतीत्यार्या विभावयन्तु ।

तथा ऋग्विधाने—

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः।
तावन्ति हरिनामानि कीर्त्तितानि न संशयः॥

इति अनेन सर्वनाम्नां श्रुतिसमत्वमिति सूचयति । अल्पायाससाध्यस्यापि महापुण्यजनकत्वमत्यल्पसुराबिन्दुप्राशनस्य महापापजनकत्ववन्नानुपपन्नम् । कीर्तनं च तत्त्वावबोधपर्यवसायि श्रवण-

परं तेन निदिध्यासनान्तत्तल्लाभः । यद्यप्येतत्काशीवासस्यावश्यकर्त्तव्यत्वार्थमुक्तं तथापि तुल्यन्यायादन्यविषयेऽपि बोध्यम् ।

इति प्रायश्चित्तं तीर्थविषयम् ।

गङ्गायमुनयोश्चैव सङ्गमो लोकविश्रुतः ।
स एव कामिकस्तीर्थस्तत्र स्नानेन भक्तितः ॥
भोगकामस्य भोगाः स्युः राज्यं स्याद्राज्यकामिनः ।
यस्य यस्य तु यः कामस्तस्य तस्य भवेद्धि सः ॥

इति भविष्यपुराणे ।

## इति तीर्थाधिकार्यादिनिर्णयः ।

## अथ प्रयागमरणविचारः ।

तत्र स्कान्दे—

यथा कथञ्चित्तीर्थेऽस्मिन्प्राणत्यागं करोति यः ।
तस्यात्मघातदोषो न प्राप्नुयादीप्सितां गतिम् ॥

एतन्मूलकमेव शस्त्रादिना मरणमाधुनिकानाम् ।

कौर्मे रुरणादीन् क्रुद्धान्प्रक्रम्य—

गङ्गायमुनमासाद्य यस्तु प्राणान्परित्यजेत् ।
ईप्सितान् लभते कामान् नैव दोषः स्वघातजः ॥

इति पाद्मे ॥

देह त्यागं तथा वीराः कुर्वन्ति मम सन्निधौ ।
मत्तनुं प्रविशन्त्येव पुनर्जन्म न ते नराः ।

इति विष्णुः ।

कौर्मे—

वटमूलं समाश्रित्य यस्तु प्राणान् परित्यजेत् ।
सर्वलोकानतिक्रम्य रुद्रलोकं स गच्छति ॥
गङ्गायमुनयोर्मध्ये कार्षाग्निं यस्तु साधयेत् ॥
अहीनाङ्गोऽप्यरोगश्च पञ्चेन्द्रियसमन्वितः ॥

यावन्ति रोमकूपाणि तावत्स्वर्गे महीयते ॥
अधःशिरास्तु यो ज्वालामूर्ध्वपादः पिबेन्नरः ॥
सूर्यलोकमवाप्नोति सूर्य्येण सह मोदते ॥
जलप्रवेशं यः कुर्य्यात्सङ्गमे लोकविश्रुते ॥
सोमलोकमवाप्नोति सोमेन सह मोदते ॥
यः स्वदेहं विकर्त्तित्वा शकुनिभ्यः प्रयच्छति ॥
शतवर्षसहस्राणि स्वर्गलोके महीयते ॥

मात्स्ये-

उर्वशीपुलिने रम्ये विपुले हंसपाण्डुरे ॥
कोटितीर्थे च रम्येऽत्र यस्तु प्राणान्परित्यजेत् ॥
बहुवर्षसहस्राणि स्वर्गे लोके महीयते ॥

इत्यर्थकमुक्तम् ॥

तथा—

शृणु राजन् प्रयागे तु अनाशकफलं महत् ॥
मुच्यते सर्वपापेभ्यो गच्छेच्च परमं पदम् ॥ इति ।

पञ्चयोजने प्रयागमण्डले यत्र क्वापि प्राणत्यागस्य महाफलत्वमुक्तम् ।

तत्र ब्रह्माण्डपुराणे—

ध्यात्वा विष्णुपदाम्भोजं प्रयागे विष्णुतत्परः ।
तनुं त्यजति वै माघे तस्य मुक्तिर्न संशयः ॥

श्रुतिरपि परिशिष्टे —

सितासिते सरिते यत्र सङ्गते
तत्राप्लुतासो दिवमुत्पतन्ति ।
ये वै तन्वं विसृजन्ति धीरा-
स्ते जनासोऽमृतत्वं भजन्ते ॥ इति ।

यत्र गङ्गा च यमुना यत्र प्राची सरस्वती ।
यत्र सोमेश्वरो देवस्तत्र माममृतं कृधि ॥ इति ।
इन्द्रायेन्द्रो परिस्रवेति च ।

भारतमात्स्यकौर्मादिषु—

न लोकवचनात्तात न वेदवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥ इति ।

तत्र मरणनिषेधकं चेदं वचनम् । (१) ('तस्मादुह न पुरायुषः स्वःकामी प्रेयदिति' स्मृतिरप्येतदर्थिकोक्ता । अत्र स्वःकामी न प्रेयादित्यनेन स्वर्गकामस्य शास्त्रेण विहितं यन्मरणं तन्निषिध्यते । अक्षरस्वारस्यात् । तस्य जीवता यज्ञादिभिरपि साधयितुं शक्यत्वादिति तदाशयः । एवञ्च यथामरणे काम्यार्थसिद्धिर्दोषश्चेत्युभयम्) । एवञ्च यज्ञाद्यसमर्थस्य तदनधिकारिणो वा तत्र प्रवृत्तिरुचितैव । तदधिकारिणोऽपि स्वर्गो मे शीघ्रं भवत्वित्युत्कटेच्छावतो दोषज्ञानेऽपि प्रवृत्तिर्भवत्येव । परन्तु दोषोऽप्युक्तश्रुतिवशात् । एवमेव सहगमने स्त्रीणां सर्वस्वारयज्ञे च यजमानस्याग्निप्रवेशे प्रवृत्तिः ।

ये तु आयुः शेषेण कदाचित्तत्त्वज्ञानसंपत्त्या मोक्षस्यापि सम्भवादनित्याल्पस्वर्गसुखार्थमायुषः प्राङ् न प्रेयान्मोक्षार्थीति श्रुत्यर्थं वदन्ति ते मान्या एव, अक्षरैरलाभात् । स्वःकामिनो मोक्षार्थित्वाभावाच्च स्वःकामिन एव निषेधात् । मोक्षकामस्य न तन्निषेधः ।

प्रयागमरणेनापि तत्त्वज्ञानद्वारैव मोक्षोऽनस्तमेव विदित्वेति श्रुत्या न विरोधः । 'ब्रह्मज्ञानेन मुच्यन्ते प्रयागमरणेन वा' इत्यत्र ब्रह्मज्ञानपदं करणव्युत्पत्त्या शमदमादिपरम् । तैरिव प्रयागमरणेनापि श्रवणादिद्वारा शीघ्रं ब्रह्मज्ञानोत्पत्तेरतो न तेन विरोधः ।

(१) तस्मादुहेत्यारभ्य—उभयामित्यन्तः पाठः ख. पुस्तके नास्ति ।

प्रयागे वा भवेन्मोक्ष इह वा मत्परिग्रहात् ।
प्रयागादपि तीर्थाग्र्यादिदमेव विशिष्यते ॥

इतिकाशीप्रकरणस्थं वाक्यं तु काशीमरणे (१) धीरत्वगुणानपेक्षणेन तदनपेक्षाकृतवैशिष्ट्यबोधनपरम् (२) । प्रयागमरणे च ब्राह्मणस्य नाधिकारः ।

शूद्राश्च क्षत्रिया वैश्या अन्त्यजाश्च तथाधमाः ।
एते त्यजेयुः प्राणान्वै वर्जयित्वा द्विजं नृप ॥
पतित्वा ब्राह्मणस्तत्र ब्रह्महा चात्महा भवेत् ॥ इत्युक्तेः ।

द्विजपदं वाक्यशेषाद्विप्रपरम् । न लोकवचनादित्यादेराग्नेयस्य (३) वशिष्ठं संबोध्य प्रवृत्तावपि तद्विषयत्वे मानाभावात् । ब्रह्महा चात्महा भवेदित्युक्त्या ऽन्येषामप्यात्मघातदोषोऽस्त्येव । यज्ञेषु पशुहिंसाजन्यपापवत् । एतच्चान्यत्र प्रपञ्चितम् । फलस्य महत्त्वाद्यज्ञवत्तत्रापि अन्येषां प्रवृत्तिः । ब्राह्मणस्य महादोषश्रवणादप्रवृत्तिरेवोचिता ।

अन्ये त्वस्य निर्मूलत्वात्सर्ववर्णानां तत्राधिकारमाहुः ।

लुप्तशौचक्रियस्य प्रत्याख्यातभिषक्क्रियस्य वृद्धविप्रादेरत्र मरणविधौ न विवादः । परन्तु तन्मरणस्य कलिवर्ज्येषु परिगणनात्साम्प्रतमनधिकार एव ।

विष्णुधर्मोत्तरेऽपि—

व्याधितो भिषजा त्यक्तो ऽपूर्णे (४) आयुषि चात्मानः ।
यथायुगानुसारेण सन्त्यजेदात्मनस्तनुम् ॥ इति ।

परे तु व्याधित इत्याद्युपक्रम्य—

तस्मिन्काले तनुत्यागाद्यथोक्तफलभाग्भवेत् ।
आयुषस्तु पुरा दृष्टं मरणं ब्राह्मणस्य च ॥

---

(१) 'काशीमरणे' ख. पु. नास्ति । (२) 'तदनपेक्षाकृत'इति ख. पु. नास्ति ।
(३) आग्नेयस्येति ख. पुस्तके नास्ति । (४) 'पूर्वे' इति ख. पाठः ।

क्षत्रियस्य तु सङ्ग्रामे मृते भर्त्तरि योषितः ।
सर्वे ह्यप्राप्तकालेऽपि गतिमग्र्यामवाप्नुयात् ॥

इति ।

विष्णुधर्मोत्तरे यथोक्तफलभागित्युक्तेः । फलार्थं विहितप्रयागमरणे आतुरादेरेवाधिकारो न त्वन्यस्य । सोऽपि युगान्तरे एव न तु कलौ यथायुगानुसारेणेत्यत्रैवोक्तेरहीनाङ्गोऽव्यरोगश्चेत्यादेरपिशब्द-घटितत्वान्न स्वार्थे तात्पर्यमित्याहुः । गर्भिण्या बालापत्याया भर्त्रा-ननुमतायाश्च स्त्रिया अनधिकारस्तु सर्वसम्मत इत्यलं पल्लवितेन ।

## इतिप्रयागमरणनिर्णयः ।

## अथ काशीप्रकरणम् ।

श्रीगङ्गाकाश्योर्मोक्षदत्वमुक्तं मनुना—

यमो वैवस्वतो राजा यस्तवैष हृदिस्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः ॥ इति ।

यमयति नियमयतीति यमः अन्तर्यामी 'य आत्मानमन्तरो यमयति एष त आत्मान्तर्याम्यमृत' इति श्रुतेः । वैवस्वतो विवस्वदधि-ष्ठाता, राजा स्वप्रकाशः यस्तवैष हृदि स्थित इति स्वानुभवप्रत्येयत्वं तस्याह 'अन्तप्रविष्ट : शास्ता जनानाम्' इति श्रुतेः । तेन परमात्मना-ऽविवादः- ऐकात्म्यं यद्यस्ति तदा मा गङ्गां मा कुरून् गच्छ अन्यथा तेन एकात्म्यज्ञानप्राप्तये तत्रैव तिष्ठेति तद्भावः । अत एव—

गङ्गायां मरणं चैव दृढा भक्तिश्च केशवे ।
ब्रह्मविद्याप्रबोधश्च नाल्पस्य तपसः फलम् ॥

इतिवेदव्यासेनोक्तम् ॥

मरणे स्मरणं विष्णोः कथ्यतेऽत्यन्तदुर्लभम् ।
तदल्पेन हि कालेन गङ्गां संसेव्य लभ्यते ॥ इति च ।

कुरुशब्देनात्र काशी। (तथा च (१) तापनीये जाबाले च श्रूयते। बृहस्पतिर्याज्ञवल्क्यं पप्रच्छ वद नः कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमिति स होवाच यन्नु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनं तस्माद्यत्र क्वचन गच्छति तदिदं मन्ये देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति तस्मादविमुक्तं निषेवेत' इत्युक्तं न विमुञ्चेनेत्याहैवमेवैतद्याज्ञवल्क्येति।

अथ हैनमत्रिः प्रपच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामिति सोऽविमुक्ते प्रतिष्ठित इति सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति वरणायां नास्यां च मध्ये प्रतिष्ठित इति का वरणा भवति का च नासीति सर्वानिन्द्रियकृतान्दोषान्वारयति तेन वरणा भवति सर्वानिन्द्रियकृतान्पापान्नाशयति तेन नासीति कतमच्चास्याः स्थानं भवति भ्रुवोर्घ्राणस्य यः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवति एवमेवैतं सन्धिं सन्ध्यां ब्रह्मविद उपासते इति सो विमुक्ते उपास्यो योऽविमुक्ते ज्ञानमाचष्टे यो वै एतदेवं वेदेति पृथिव्यामेव। अनुः प्रसिद्धो कुरुशब्दः पापवाची कुत्सितावरणजनकत्वात्तस्य क्षेत्रं क्षेपणात्त्राणकरं पापक्षयकरं देवानामपि देवयजनं ब्रह्मोपास्तिस्थानं सर्वेषां भूतानां भवन्ति उत्पद्यन्ते तानि भूतानि उत्पत्तिधर्मकाणि जरायुजाण्डजस्वेदजोद्भिज्जानि तेषां ब्रह्मसदनं ब्रह्मप्राप्तिकरं स्थानम्।

---

(१) ( ) रेखामध्यस्थस्थाने 'तथा च तापनीये जाबाले चोक्तं बृहस्पतिर्याज्ञवल्क्यं पप्रच्छ वद नः कुरुक्षेत्रं देवानां देवयजनं ब्रह्मोपास्तिस्थानं सर्वेषां भूतानां भवन्ति उत्पद्यन्ते तानि भूतानि उत्पत्तिधर्मकाणि जरायुजाण्डजस्वेदजाद्भिज्जानि तेषां सर्वेषां ब्रह्मसदनं ब्रह्मप्राप्तिकरं स्थानं किमिति प्रश्न उत्तरम् अनु प्रसिद्धं यत्तथाप्रसिद्धं तदविमुक्तमेव' इति ख. पुस्तके पाठः लेखकप्रमादेन सजातत्रुटिकः।

अत एवोक्तं पौष्करेऽष्टादशे—

तत्रैव ब्रह्मसदने निस्तृणद्रुमकण्टके ।
प्रांजेन्धनतृणे देशे ? पुण्ये पर्वतरोधसि ॥
वासमत्र प्रकुर्वन्ति दृष्ट्वा भगवतः क्रियाम् ।
तपोऽर्थिनो महाभागा ब्रह्मचर्य्यव्रते स्थिताः ॥
गृहस्थधर्मनिरता जितक्रोधाः समाहिताः (१) ।
यतयश्चापि काङ्क्षन्ति धर्मेणेह विकाङ्क्षणाः ।
वन्यैः कर्मफलैश्चैव रता ब्राह्मणपुङ्गवाः ॥
अग्निहोत्रव्रतस्नाता जितक्रोधाः समाहिता ।
दैवयुक्तेन वा युक्ताः कर्मणा ब्रह्मसत्तमाः ॥
चीरवल्कलसंवीना नियता नियतेन्द्रियाः ॥ इति ।

तत्रैव पृथिव्यामेव सदने उक्तश्रुतिप्रसिद्धे वाराणस्यन्तर्गतेऽविमुक्ते तत्रैवेतिविशेषणमाध्यात्मिकभ्रूघ्राणसन्ध्याख्यब्रह्मसदननिवृत्त्यर्थम् ।तदुपास्त्यनधिकारिणामेव प्रस्तुतत्वात् । क्षेत्रमेवात्र ब्रह्मसदनशब्दार्थः। पर्वतस्य विन्ध्यस्य रोधसि समीपे भगवतः क्रियां गत्यागतिरूपां तपोऽर्थिनः तप अलोचने । अत्र हि जन्तोरित्यादि भवतीत्यन्तश्रुतिप्रसिद्धमोक्षहेतुतत्त्वज्ञानार्थिनइत्यर्थः दानप्राप्तेन शुद्धिं प्राप्तेन दैपृशोधने अस्य ल्युडन्तस्य रूपं दानमिति । यतय इति संन्यासिनां ग्रहणम् । चोऽप्यर्थे । यतयोऽपि इह काङ्क्षन्ति वासमित्यनुषज्यते । तेषामपि अविमुक्ते प्रविष्टानां विहारो नैव नैत्र विद्यते इति काशीतोऽन्यत्र गमननिषेधात् । विकाङ्क्षिणः— विशेषेण काङ्क्षा इच्छा विकाङ्क्षा तद्वन्तः । इह वस्तुमित्यर्थ. । वानप्रस्था अपि एतदेव काङ्क्षन्तीत्याह वन्यैरिति द्वाभ्याम् । एतेऽपीह वासं काङ्क्षन्तीत्युनुषज्यते इति तदर्थः। किमिति प्रश्ने उत्तरम् अनु प्रसिद्धं यत्तथाप्रसिद्धं

(१) अस्य श्लोकस्योत्तरार्द्धस्त्रुटितः प्रतीयते अग्रे दानप्राप्तेनेति प्रतीकधारणात् ।

तश्चविमुक्तमेव )। ईश्वरेण कदाचिदपि मुक्तं न भवतीत्यविमुक्तम। वै एवार्थे। तस्मादविमुक्तादन्यत्र यत्र क्व च यत्र क्वापिऽमोक्षेच्छया न गच्छति न गच्छेत्। लेट्। तदिदमेव देवयजनत्वादिगुणविशिष्टं कुरुक्षेत्रपदवाच्यं मन्ये ऽवगच्छामि तत्र हेतुमाह हि यतः अत्र जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तापत्रयात्मकं संसारदुःखं रुत् तत् द्रावयतीति रुद्रोऽन्तर्यामी तारकं तत्त्वमस्याद्यैक्यबोधकं व्याचष्टे उपदिशति। येनासावमृती ब्रह्मरूपो निवृत्ताज्ञानतत्कार्यको वा भूत्वा मोक्षीभवति मुक्तो भवति 'ब्रह्मैव सन् ब्रह्माप्येति विमुक्तश्च विमुच्यत' इति श्रुतेः। च्विस्तु छान्दसः। तस्माद्धेतोरविमुक्तमेव निषेवेत न त्यजेच्चा मरणान्तिकम्। यद्वा अविमुक्तं तदाख्यं रुद्रं तारकप्रदातारं निषेवेत आचार्य्योपासनस्य विद्याङ्गत्वात्। एवमेवैतदवगन्तव्यमिति बृहस्पतिपृष्टो याज्ञवल्क्यः सस्नेहमुवाचेति।

अविमुक्तमिदं मुक्त्वा देशं संसारनाशनम्।
नान्यत्र निवसेत्प्राज्ञः क्षणमात्रमपि प्रिये॥
अत्रैवोत्क्रममाणस्य जन्तुमात्रस्य केवलम्।
वेदवेदान्तसारस्य प्रणवाख्यस्य पार्वति॥
ब्रह्मणस्त्वर्थभूतोऽहं संसारद्रावको विराट्।
आनन्दं सत्यचिद्रूपं तारकं तमसः परम्॥
स्वयं भान्तं निराधारं दास्यामि प्रत्यगात्मना।
येनैवाशु महद् दुःखं प्रणश्येत महेश्वरि॥
परित्यज्य स्वसंसारं परानन्दो भवेच्छिवे।

इत्येतच्छ्रुत्यर्थानुवादकपराशरोपपुराणात्॥

अथ हैनमित्यादेरयमर्थः। कथमित्यस्य क्वेत्यर्थः। अविमुक्ते प्रतिष्ठित इत्युत्तरानुसारात्। अविद्याकल्पितावच्छेदो जीवोऽविमुक्तः न विमुक्तो देहबन्धनेनेति योगात्। तत्र परमात्मा प्रतिष्ठितस्तादाम्यात्। अविमुक्तप्रतिष्ठास्थानं च वरणा नासी मध्यं ततो वरणा-

नासीशब्दार्थं निरुच्य तयोस्तन्मध्यस्य च स्पष्टं कथनाय पुनः प्रश्ने भ्रूघ्राणस्य सन्धिरित्युत्तरम् । भ्रूर्वरणा नासी च घ्राणमिति प्रथमाध्यायद्वितीयपादान्ते भाष्यवाचस्पत्यादिषु स्पष्टम् । एवञ्चाविमुक्तव्यवहारादिदमप्यविद्यावच्छिन्नब्रह्मरूपम् । अत्रापि मृतानां मुक्तिदत्वेन परमात्मा स्थित इत्यर्थलब्धम् ।

पुराणे मदीयमविमुक्तमित्यस्य कल्पितभेदेन मदाधारभूतविमुक्तमित्यर्थः । इन्द्रियकृता दोषा रागद्वेषादयः तत्कृतानि पापानि सुरापानब्रह्मवधादीनि । सर्वानिन्द्रियकृतान्पापानित्यत्र लिङ्गव्यत्ययश्छान्दसः । क्वचित्पापानिनाशयति तेन नासीति पाठः । घ्राणशब्देन ( घ्रा ) प्राण वायुसञ्चारकघ्राणमूलमुच्यते । द्युलोकतत्परलोकयोः सन्धिः सन्ध्येति चोच्यते सः एवमेतां सन्ध्यां ब्रह्मविदो भूस्था विमुक्तत्वेनोपासते । ईश्वरोऽविमुक्तत्वेन ध्यातोऽस्मिन्स्थाने उपास्यः योऽविमुक्ते ज्ञानमाचष्टे । तथोपासका नामपि वाराणसीमृतानामिव यश्चैवमुपासनाप्रकारं वेद तस्य चेति । तत्र भूस्थे क्षेत्रे मुख्योऽविमुक्तशब्दः तदारोपस्थानाद्गौण्या भ्रूमध्यमपि । तात्स्थ्याद्रुद्रोऽप्यविमुक्तः तत्प्रसादलभ्यत्वाज्ज्ञानमप्यविमुक्तम् । ज्ञानसाधनध्यानेऽपि लक्षणयाऽविमुक्तशब्दः यथा भ्रूघ्राणस्य वरणानासीत्वं गौणमेवं तयोः सन्ध्याविमुक्तत्वं गौणम्, अस्यां श्रुतौ भ्रूघ्राणमेव वरणानासिशब्दितं न तु प्रसिद्धमिति शांकरभाष्योक्तेः । यदा योगी सन्धिमात्रनिष्ठो भवति तदा सर्वदोषपापनाशो प्रसिद्धम् । भवतीति एवञ्च भूस्थं क्षेत्रमितरनिरपेक्षं मोक्षजनकज्ञानसाधनमितरदुपासनासापेक्षमिति बोध्यम् ।

वरणानासिसंज्ञं यत्तत्स्थानं सर्वदेहिनाम् ।
भ्रुवोर्घ्राणस्य यः सन्धिस्तस्मिन्नेव प्रतिष्ठितम् ॥
मदीयमविमुक्तं तच्चिन्तनीयं मुमुक्षुभिः ।
केवलं चिन्तनेनास्य सर्वपापं प्रणशयति ॥

इति पराशरोपपुराणात् ।

तथा तत्रैव—

पुराऽत्रिः श्रद्धया पूर्वं पुण्यराशिबलेन तु ।
याज्ञवल्क्यं मुनिश्रेष्ठमपृच्छज्ज्ञानसाधनम् ॥
योगीश्वरो मुनिश्रेष्ठः साक्षाद्विज्ञानसिद्धये ।
मामुपास्यतया प्राह साक्षाद्विज्ञानसिद्धये ॥
अन्ये च योगिनोऽध्यात्मे भ्रुवोर्घ्राणस्य मध्यमे ।
प्रकाशमण्डलं शुद्धं वरणानासिकाभिधम् ॥
केवलं भावनागम्यमुपदिश्य सुलोचने ? ।
तन्मध्ये मामकं क्षेत्रमविमुक्तसमाह्वयम् ॥
ओङ्कारहृदयं सूक्ष्ममुपदिश्य ततः परम् ।
तदग्रे मामनाद्यन्तमशक्तं सर्ववस्तुनि ॥
मोक्षसाधनविज्ञानसाधनत्वेन केवलम् ।
प्राहुः सर्वमुमुक्षूणामुपास्यत्वेन केवलम् ॥
भ्रुवोर्घ्राणस्य यः सन्धिस्तं धियामरनासिके ।
द्युलोकस्य परस्यायं सन्धिरित्यपि भावयेत् ॥
सन्धिसंज्ञं च मामेवं सन्धिभूतमुपासते ।

पूर्वेऽपि ब्रह्मविद्वांस इति द्वितीयश्रुत्यर्थो दर्शितः । एवञ्च कुरुक्षेत्रशब्दस्य श्रुत्याऽविमुक्तक्षेत्रे मुक्तिजनके शक्तिसिद्धौ मनुवाक्येऽपि नामैकदेशे नामग्रहणमिति न्यायेन कुरुपदेन ग्रहणमिति सिद्धम् । न तु प्रसिद्धस्य सरस्वतीनदीतीरस्थस्य परशुरामकृतपञ्चह्रदवतः कुरुक्षेत्रस्य ग्रहणम् । निषेधमुखेन मुक्तिदत्वप्रतिपादनात् ।

वनपर्वणि महाभारते तत्क्षेत्रमुपक्रम्य 'ते वसन्ति त्रिविष्टपे' स्वर्गलोके महीयते' इत्यादिना स्वर्गफलस्यैव श्रवणाच्च ( बहुवचनं त्ववान्तरक्षेत्राभिप्रायम् ) (१) ।

---

(१) रेखामध्यस्थः पाठः ख. पु. नास्ति ।

यत्तु तत्प्रकरणे—

मनसाप्यभिकामस्य कुरुक्षेत्रं युधिष्ठिर ।
पापानि विप्रणश्यन्ति ब्रह्मलोकं च गच्छति ॥

इत्युक्तम् । तत्र ब्रह्मलोकशब्देन ब्रह्माण्डान्तर्गतचतुर्मुखलोकरूपः स्वर्गविशेष एव, 'मनसाप्यभिकामस्ये'त्युपक्रमात् न तु तत्काशीपरं मरणेनैव तत्र मोक्षस्य श्रुत्या प्रतिपादनात् । वनपर्वणि तदुपक्रमस्याग्रे ब्रह्मलोके महीयत इत्युक्तेश्च । उपक्रमोपसंहाराभ्यां तस्य कुर्वाख्यराजविशेषकृष्टक्षेत्रपरत्वाच्च । तत्र कर्षणफलस्य युद्धमृतानां स्वर्गप्राप्तिरूपस्य स्मरणाच्च । अतएव कौरवपाण्डवयुद्धे तत्रापि युद्धेन मृतानां तत्तल्लोकवास उक्तः । तत्रात्र हि जन्तोः प्राणेषूत्क्रममाणेष्वित्युक्तेर्वरणासिमध्यवर्त्तिनां मनुष्यव्यतिरिक्तानां स्थावराणां जङ्गमानां च तेषां प्राणप्रयाणसमये उत्पत्तिस्थितिप्रलयकारणानां पुण्यपापकर्मणां मध्ये प्रारब्धेन शरीरेण क्रियामाणयोः पुण्यपापयोरभावात्प्रारब्धकर्मणां भोगादेव परिक्षयात् विद्यमानस्यापि तत्कालमेव मायया स्वप्ने इव भोगं सम्पाद्याधिकारिदेहं च सम्पाद्य सर्वज्ञः सर्वशक्तिः सर्वान्तर्यामी परमकारुणिकः स्वतः सिद्धमात्मरूपमविद्याप्रहाणादवगमयति । मनुष्येषु ये सगुणब्रह्मोपासकाः ये च केवलं फलनिरपेक्षतया श्रुतिस्मृत्युक्तस्ववर्णाश्रमोचितकर्मानुष्ठातारस्तेषां सर्वेषां चत्वारिंशत्संस्कारैः संस्कृतानामसंस्कृतत्वेपि अष्टभिरात्मगुणैर्युक्तानां प्राणप्रयाणसमये पूर्वोक्तरीत्यैव तदवगमयति । अन्येषामपि मनुष्याणामुत्कटपापेभ्यो निवृत्तानां गङ्गावगाहनदेवदर्शनजपदानादिभिः क्षीणपुराकृतपापकर्मणामवशिष्टकाम्यपुण्यकर्मणामल्पावशिष्टक्षुद्रपापानां प्राणप्रयाणाव्यवहितपूर्वक्षणे सर्वान्तर्यामी भगवान्माययैव तादृशकर्मफलभोगयोग्यशरीराणि उद्भाव्येष्टानिष्टान्स्वप्रकल्पान्भोगाननुभाव्य उक्तरीत्यैव अवगन्तव्यमवगमयति ।

तदुक्तं सूतसंहितायाम्—

ईदृशी परमा निष्ठा गुरोः साक्षान्निरीक्षणात् ।
कर्मसाम्येऽप्यनायासात्सिध्यत्येव न संशयः ॥ इति ।

कर्मणः सुकृतदुष्कृतयोः फलभोगेन क्षयसाम्येऽपीत्यर्थः ।

वासिष्ठेऽपि—

यथा स्वप्ने मुहूर्ते स्यात्संवत्सरशतभ्रमः ।
तथा मायाविलासोत्थो जायते जाग्रति भ्रमः ॥ इति ।

एतदभिप्रायेणैवोक्तम्

कृत्वा कर्माण्यनेकानि शुभानि चेतराणि च ।
तानि क्षणात्समुत्क्षिप्य काशीसंस्थोऽमृतो भवेत् ॥ इति ।

लब्धवाक्यानामीदृशानां मृतदेहः शिवस्य प्रतिमेति विश्वेश्वरलिङ्गवन्नम्यः पूज्यश्चेति आश्वमेधिके पर्वणि मरुत्तसंवर्तोपाख्यानाल्लभ्यते । तथा हि मरुत्तो राजा बृहस्पतिना याजकेन प्रत्याख्यातश्चिन्ताविष्टो नारदेनैवं बोधितः । काश्यामुन्मत्तवच्चरन् बृहस्पतिभ्राता संवर्तोऽस्ति स त्वां याजयिष्यति स मया कथं परिचेय इति राजप्रश्ने यो विश्वेश्वरदर्शनार्थी मार्गे शवं दृष्ट्वा तं प्रणम्य संपूज्य च निवर्तते स संवर्तः इति ज्ञेय इति तत्रोक्तम् ।

ये तु उत्कटपापा गङ्गादिदेवेष्वप्यनाश्वस्ता दम्भेनाश्वासनाटका वा काश्यां महत्सु पापेषु रतास्तेषां तु यातनान्तेऽवगन्तव्यमवगमयति ।

अधर्मिष्ठस्य तत्क्षेत्रे यातनान्ते दिशेन्मतिम् ।
काश्यां कृतस्य पापस्य भोगो रुद्रपिशाचता ॥
एकैकस्य च पापस्य समानामयुतत्रयम् ॥

इति पाद्मोक्तेः ।

अत्र यातनान्तकालिके देहेऽधिकारः संपद्यते। तद्देहेऽपि मुमूर्षुत्वादत्र हि जन्तोरिति श्रुत्या तु न विरोधः। जाबालश्रुतावपि पापिन उपक्रम्य भैरवीं घोरां यातनां नानाविधां काश्यां परेता भुक्त्वा ततः शुद्धा मां प्रपद्यन्ते इत्युक्तम्। एवमुत्कटकाम्यपुण्यवतामपि तत्तत्पुण्यभोगान्ते मुक्तिरुक्ता मात्स्ये—

चन्द्रार्धमौलिनः सर्वे ललाटाक्षा वृषध्वजाः।
शिवे मम पुरे देवि मोदन्ते तत्र मानवाः॥ इति।

गारुडेऽपि—

वाराणस्यां स्थितो यो वै पातकेषु रतः सदा।
योनिं प्रविश्य पैशाचीं वर्षाणामयुतत्रयम्॥
पुनरेव च तत्रैव ज्ञानमुत्पद्यते ततः।
मोक्षं गमिष्यते सोऽपि सत्यमेतत् खगाधिप॥ इति।

तथा ब्रह्मवैवर्ते शिवशर्माद्युपाख्यानेन यातनान्ते मुक्तिरिति स्पष्टमेवोक्तम्।

मन्मना मम भक्तश्च मयि सर्वार्पितक्रियः।
यथा मोक्षमवाप्नोति न तथान्यत्र कुत्रचित्॥

इति मात्स्येन ईदृशस्यैव सद्योमोक्षप्रतिपादनाच्च। तस्मादुक्तश्रुतौ जन्तुपदं मनुष्यविषये ईदृशमनुष्यपरमेव। जन्तुपदं सकलस्थावरमनुष्येतरसकलजङ्गमसंग्रहाय चेति तत्त्वम् एतत्सर्वमग्रे पाद्मलेखने स्पष्टम्। यस्य तु पापिनोऽनेकजन्मारम्भककर्मणारब्धोदेहस्तस्य काश्यां मृतस्यापि काश्यामेव तावज्जन्मप्राप्त्या शनैर्मुक्तिर्भवति। अत एव कस्यचिल्लुब्धकस्य काश्यामोङ्कारेश्वरसन्निधौ मृतस्यापि जन्मानन्तरं

मुक्तिरुक्ता शिवपुराणे । पाद्मे च काशीकृतपापस्य तत्रैव मृतस्य कस्य चिद्दशजन्मानि अग्रे काञ्चनमालिनीदत्तमाघस्नानपुण्येन देवजन्म च श्रूयते । यत्तु काशीकृतपापोऽन्यत्र मृतः सविविधयमयातनानन्तरं भैरवकृतां रुद्रपिशाचतामनुभूय काश्यां देहग्रहणपूर्वकं मुच्यते इति काशीखण्डे ।

यत्तु

अशनं वसनं वासो काश्यां येषाममार्गतः ।
कीकटेन समा काशी गङ्गाप्यङ्गारवाहिनी ॥ इति ।

तत्तु—तेषां सद्योमुक्त्यभावपरम् काशीविषयपुराणानामर्थवादत्वं मा जानीहि अर्थवादत्वमात्मतत्त्वविनिर्णये इत्यनेन निराकृतं ब्रह्मवैवर्ते । यत्तु देशान्तरस्थः कृतमहापातकोऽपि काशीमागत्य म्रियते तस्य सद्योमुक्तिरेव ।

ब्रह्महाऽप्यभिगच्छेत्तु अविमुक्ते महावने ।
तस्य क्षेत्रस्य माहात्म्याद् ब्रह्महत्या निवर्तते ॥
न केवलं ब्रह्महत्या प्राकृतं च निवर्तते ।
प्राप्य विश्वेश्वरं देवं न स भूयोऽभिजायते ॥

इति मात्स्यात् ।

जन्मान्तरसहस्रेषु यत्पापं पूर्वसंचितम् ।
अविमुक्तप्रविष्टस्य सर्वं व्रजति वै क्षयम् ॥

इति लैङ्गाच्च ।

बुद्धिपूर्वमविमुक्ते प्राणत्यागिनामपि मोक्ष एव भवति ।

अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः ।
प्रविशन्ति मुखे ते मे निःसंदिग्धं वरानने ॥

इति मात्स्यात् ।

एवमनशनेनापित्यपि तत्र ।

ब्राह्मे—

अविमुक्ते म्रियेद्यस्तु प्रत्याख्यातभिषक्क्रियः ।
काष्ठपाषाणभूतस्तु जाह्नवीजलमध्यगः ।
अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः ॥

प्रणवं तारकं ब्रूते' इत्युक्तेश्च । तत्र वैधप्राणत्यागिनां सद्योमोक्षः अवैधेन तथाकुर्वतां किंचिद्विलम्बेनैवेति बोध्यम् । इयमाधिभौतिकी वाराणसी विराजो ब्रह्मणः सकलतत्तद्ब्रह्माण्डजीवसमष्टेर्भ्रुवोर्मध्यस्थिता व्यष्टिजीवानां प्रत्येकं भ्रुवोर्मध्ये अध्यात्मभूता केवलोपदेशगम्या एतदध्यात्मस्थानम् एतदधिदैवमपि तत्तदेव लोके ऊह्यम् । तेष्वाधिभौतिकी मुख्या अध्यात्मे तस्या ध्येयत्वस्य श्रवणात् स्मरणाच्च (१) ।

कुरुक्षेत्रं यत्प्रसिद्धं भूम्यां पापनिवर्तकम् ।
तदाश्रयफलं चापि लभतेऽस्यैव सेवया ॥
देवानां देवयजनं प्रसिद्धं यन्महेश्वरि ।
सर्वेषामपि भूतानां तद्ब्रह्मसदनं परम् ॥

इति पराशरोपपुराणाच्च ।

अन्यच्च पापसंघातनिवर्तकतयैव च ।
प्रसिद्धं सर्वलोकेषु स्थानं तीर्थं च यत्प्रिये ॥
इदमेव हि तत्सर्वमविमुक्तं यदव्ययम् ।
यस्यैव सेवया तानि सेवितानि भवन्ति वै ॥

इत्यपि तत्रैवोक्तम् ।

तीर्थार्थी न बहिर्गच्छेन्न देवार्थो कदाचन ।
सर्वतीर्थानि देवाश्च वसन्त्यत्राविमुक्तके ॥

---

(१) 'स्मरणाच्च' इति ख. नास्ति ।

तथा सर्वाणि तीर्थानि सप्तपुर्यश्च मानदे ।
वसन्ति काशीमाश्रित्य स्वसामर्थ्यविवृद्धये ॥

इतिब्रह्मवैवर्ते ।

स्कान्दे—

श्रीशैलहिमशैलाद्यान्यन्यान्यायतनानि च ।
तपांसि नानारूपाणि संन्यासः सर्वकर्मणाम् ॥
विष्णोराराधनं श्रेष्ठं मुक्तयेऽभिहितं किल ।
पुर्यश्चापि समाख्याता मृतजन्तुविमुक्तिदाः ॥
एतानि यानि प्रोक्तानि काशीप्राप्तिकराणि हि ।
काशीमप्राप्य भवेन्मुक्तो जन्तुर्नान्यत्र कुत्रचित् ॥ इति ।

एतेन सर्वपुण्यजनकसमष्टित्वं काश्या उक्तम् ॥

## अथ स्फुटकाशीमाहात्म्यबोधकपद्मपुराणस्थ-पञ्चाध्यायीसारो लिख्यते ।

तत्र हि काशीमुपक्रम्य—

प्रभावः श्रूयतामस्य नित्यानन्दस्वरूपिणः ।
अत्र त्यक्तासवः सन्तः सच्चिदानन्दरूपताम् ॥
यथायोग्यं लभन्ते हि नात्र कार्या विचारणा ।
अत्र प्रविष्टमात्रस्य जन्तोः पापं पुरार्जितम् ॥
विनाशमाप्नोति परं पुण्यराशिश्च वर्धते (१) ।
निर्वाणपदमेवैतदधितिष्ठामि नित्यशः ॥
म्रियमाणस्य जन्तोश्च वाक्यं कर्णे समुच्चरन् ।

वाक्यं तत्त्वमसीति त्वमोमसीति वा । शुद्धशूद्रदेहे तु श्रीरामस्त्वमसीति ।

(१) 'जायते' ख. पाठः ।

विना वाक्योपदेशेन ब्रह्मात्मैक्यं न भासते ।
ब्रह्मात्मैकत्वविज्ञानादृते मुक्तिर्न जायते ॥
नियमेनेह कथये तदहं यस्य कस्यचित् ।
स्वे स्वे कर्मणि निष्णातानुत्तमाधममध्यमान् ॥
अधमानपि मार्गस्थान्नयामीह परां गतिम् ।
पण्डितो वाथ मूर्खो वा मुखजो वा तथान्त्यजः ॥
अस्मिँल्लिङ्गे त्यजन्प्राणान् धर्मकृन्मुक्तिमाप्नुयात् ।

अनेन मरणकाले एव तत्त्वज्ञानं पापेभ्यो निवृत्तस्य धर्मिष्ठस्यैवेति बोधितम् ।

पापकृन्म्रियते काश्यां यदि प्राक्पुण्यगौरवात् ।
न जातु नरकं याति का कथा धर्मतत्परे ॥

पापकृत् काशीभिन्नदेशे ।

भूमौ जलेऽन्तरिक्षे वा यत्र क्वापि मृतो द्विजः ।
ब्रह्मात्मैकत्वमाप्नोति काशीशक्तिरुपाहिता ॥

आप्नोति जानाति ।

काशीति वर्णद्वितयं स्मरंस्त्यजति पुद्गलम् (१) ।
यत्र क्वापि भवेत्तस्य कैलासे वसतिः सतः ॥
ततः पुनः सः पुण्यात्मा काश्यां मुक्तिमवाप्स्यति (२) ।
अधर्मिष्ठस्य तत्क्षेत्रे यातनान्ते दिशेन्मतिम् ॥
काश्यां कृतस्य पापस्य भोगो रुद्रपिशाचता ।
एकैकस्य च पापस्य समानामयुतत्रयम् ॥

पुरुषस्य यावन्ति पापानि तेष्वेकैकस्य समानामयुतत्रयमित्यर्थः । एतदग्रे स्फुटीभविष्यति । 'ऊषरः पुण्यपापानां धन्या वाराणसी पुरी' इति तु तत्रार्जितानां तेषां जन्मान्तरानारम्भकत्वपरम् ॥

(१) 'यस्तनुम्' ख. पाठः । (२) 'मवाप्नुयात्' ख. पाठः ।

यत्त्वेतद्बलान्मार्कण्डेयदृष्टमायावदत्यल्पकालेनैव कोटिकल्पयोग्ययातनानुभवः न तु कान्त्यनन्तरं प्राणेषूत्क्रममाणेष्विति वर्त्तमानकालश्रुतिविरोधादिति तन्न ईदृशैरुपबृंहणैस्तत्र जन्तुपदस्य काश्यर्जितपापहीनजन्तुपरत्वात्। अन्यदेशार्जितपापानां वाराणसीदर्शनेनैव निवृत्तेः। पुण्यफलस्य सायुज्यादेरुत्कान्त्यनन्तरं प्राप्तिवत् उत्कटपापफलस्यापि प्राप्तौ बाधकाभावात्।

तस्मात्पापं न कर्त्तव्यं मनागपि विभोः पुरे।
काश्यां यो निजधर्मेण मुमुक्षुस्तिष्ठति द्विजः॥
अनायासाविलम्बाभ्यां स मोक्षं लभते ध्रुवम्।
ये काश्यां संश्रयाविष्टा मुक्तौ तेषां शरीरिणाम्॥
प्राणप्रयाणसमये प्रमाणं परमेश्वरः।
तत्र स्वल्पं हुतं जप्तं दत्तं तप्तं द्विजोत्तमाः॥
भूयादनन्तफलदं तत्क्षेत्रस्य प्रभावतः।
आनन्दकाननं तद्धि शङ्करस्यातिवल्लभम्॥
न विमुञ्चति विश्वात्मा अविमुक्तं ततः स्मृतम्।
द्विजं स्वधर्मनिरतं यो वर्षासनदानतः॥
स्थापयेच्छ्रद्धया युक्तस्तस्य पुण्यफलं शृणु।
यावत्यः सिकताः सन्ति गङ्गायां मुनिसत्तम॥
तावद्वर्षसहस्राणि क्रीडेदिन्द्रेण सङ्गतः।
पश्चादत्र महाराजो जायते निर्मले कुले॥
अन्ते च लभते काशीं ततो निर्वाणमाप्नुयात्।
अश्वत्थं पिचुमन्दं वा सहकारमथो लताम्॥
यो रोपयति यत्नेन तस्याप्येतत्फलं भवेत्।
वाराणस्यां मृतः पापो नोपैति यमयातनाम्॥
नियन्ता भैरवस्तस्य कालकालः कपालभृत्।
आसीत्कमेलको नाम्ना शूद्रः काशीपुरे पुरा॥

धर्मात्मा द्विजभक्तश्च दयावाननसूयकः।
कालक्रमेण तत्रैको विप्रो वेदविचक्षणः॥
भागुरिः समुपागच्छन्निवासाय विभोः पुरे।
स तु क्रमेलकगृहं जगाम सुबुभुक्षितः॥
तस्य द्वारि समासीनो याचते स्म विनीतवत्।
क्रमेलकश्च तं दृष्ट्वा पूर्वपापनियन्त्रितः॥
भर्त्सयामास सततं ताडयामास पाणिना।
अथ कालेन महता व्याधिग्रस्तो बभूव सः॥
तत्याजासून् शिवक्षेत्रे मणिकर्णीजलाश्रितः।
ततः स भैरवगणैर्यातनासु नियोजितः॥
क्रमेलकस्तु मूषासु ध्मातो वर्षसहस्रकम्।
तावत्कालं शीतह्रदे बुभुजे दुःखमुत्कटम्॥
ततो निर्जलनिर्भक्षे कृमिदेहधरोऽभवत्।
तत्रैव सारमेयोऽभूद् गलन्मांसः सुदुःखितः॥
त्रिंशत्त्रिशत्समाः पश्चात्तावत्कालं गजोऽभवत्।
ततः सङ्कीर्णयोनीनि शरीराणि व्यधारयत्॥
अथ शूद्रशरीरं स दध्रे तत्र क्रमेलकः।
ततो भैरवदूतैस्तैः स नीतो भैरवाग्रतः॥
कालभैरवदृष्ट्यैव रुद्रपैशाच्यमाप्तवान्।
त्रिंशद्वर्षसहस्राणि क्षुत्तृषाभ्यां विशोषितः॥
ततोऽमुं क्षीणकलुषं शङ्करस्तारकं वचः।
श्रावयामास विधिवत्सम्पाद्याधिकृतिं पराम्॥

अत्र ब्राह्मणावमाननरूपपापादेव तावद्रुद्रपिशाचतोक्त्या प्रतिपापं तावत्सेति गम्यते।

यद्यत्पापं काशिकायामवाप्तं
स्थूलोत्कृष्टं जानताऽजानता वा।

तत्तद्भोगप्रापणायैव देहा
अयोनिजा भैरवेच्छाविधानाः ॥
उच्चावचा यातनैकप्रधाना
विद्यन्ते काशीकृताघात् (१) ।

यथा याम्ये हि नरके यातना दुःखभागिनाम् ॥
अयोनिजादिदेहाः स्युस्तद्वदेवावधार्यताम् ।
गङ्गादितीर्थस्नानैश्च लिङ्गानां च समर्चनैः ॥
विनाशमाप्नोति पुनर्यदज्ञानादुपार्जितम् ।
स्वल्पं ज्ञानादपि कृतं विश्वेशस्य समर्चनात् ॥
नश्यत्येव न सन्देहो भूयस्तदनुमार्जनात् ।
उपपातक-सम्पत्तिर्महापातक-सङ्क्रमः ॥
कालभैरवनिर्दिष्टयातनां प्राप्नुयात्पराम् ।
स्थूलं यो दुरितं काश्यां कृत्वाऽन्यत्र मृतो भवेत् ।
स कल्पकोटिभिस्तस्य पापस्यान्तं न गच्छति ।
अविमुक्ते तु यस्तिष्ठेदाकलेवरपातनात् ।
तं विश्वेशोऽत्र जीवन्तं मृतं च परिरक्षति ।

क्षेत्रे पवित्रे मृतिमागतानां
ब्रह्मादिकीटान्तशरीरभाजाम् ।
कर्णे जपत्यक्षरतारकाख्यं
वाक्यं ततो ध्वस्तभवा भवन्ति ॥

वाक्यम्-त्वमोमसीतिवाक्यम् ।

मघवन्भगवानीशो भवान्या सहितोऽनिशम् ॥
अधितिष्ठति जन्तूनां मुक्त्यै क्षेत्रमिदं परि ।
वाराणसीस्थतीर्थाऽनामवगाहनतः परम् ॥

---

(१) अत्र छन्दोभङ्गः ।

अन्तःकरणसंशुद्धिं प्राप्नुयाद्विजितेन्द्रियः ।
तीर्थान्तराणि क्षेत्राणि विष्णुभक्तिश्च नारद ॥
अन्तःकरणसंशुद्धिं जनयन्ति न संशयः ।
वाराणस्यपि देवर्षे तादृश्येव परं तु सा ॥
प्रकाशयति ब्रह्मैक्यं तारकस्योपदेशतः ।
अनेनैव विशेषेण तां प्रशंसन्ति तात्त्विकाः ॥
साक्षाद्वाराणसी मुक्त्यै विष्णोर्भक्तिस्तथाविधा ।
तथापि विष्णुभक्तिस्तु द्वित्रैरेव विभाव्यते ॥
काशी तु तिर्यग्भूतानामपि साधारणी मता ।
काश्यां कृतेन पापेन यातनामतिभीषणाम् ॥
प्राप्य पश्चाद्विमुच्यन्ते सर्वथा क्षीणकल्मषाः ।
वाराणस्यां कृतं कर्म नीलकण्ठाय चार्पितम् ॥
मनः शुद्धिं विधायाशु तत्त्वज्ञानाय कल्पते ।
यत्कर्म काश्यां कुर्वीत शुभं वा यदि वाऽशुभम् ॥
अक्षयं तत्प्रभवति नाऽत्र कार्या विचारणा ।
धर्मिष्ठस्यात्र दैत्येन्द्र शरीरत्यागमात्रतः ॥
अपवर्गो भवत्येव तदन्यस्य विलम्बतः ।
एतत्कृताघसंघातो घोरां भुक्त्वा तु यातनाम् ॥
पैशाचं समवाप्नोति वर्षाणामयुतत्रयम् ।

प्रतिपापमितिशेषः ।

विहाय काममर्थं च दम्भं मात्सर्यमेव च ।
प्रतिग्रहपरावृत्तः शान्तिदान्तिसमन्वितः ॥
अकुर्वन् कलुषं कर्म समलोष्ठाश्मकाञ्चनः ।
पञ्चाक्षरपरो नित्यं निषेवेत विभोः पुरीम् ॥
गृही चेद्धर्मनिरतो बहिरर्जितवित्तभुक् ।
व्यवहारोपयोग्यत्र गृह्णन्वा विमलं वसु ॥

प्रियातिथिस्तीर्थपरो निषेवेत विभोः पुरीम् ।
स्वस्वजात्यनुसारेण यो धर्मो यस्य कल्पितः ॥
तत्तद्धर्मरतैरेव सेव्या वाराणसी पुरी ।
अन्यैः संसेव्यमाना सा कीकटान्नातिरिच्यते ॥

कीकटत्वं च मुक्तौ विलम्बात् ।

अन्यत्रापि—

अशनं वसनं(१) वासः काश्यां येषाममार्गतः ।
कीकटेन समा काशी गङ्गाप्यङ्गारवाहिनी ॥ इति ।

काश्यादिपरिमाणकथनम्—

मध्यमेश्वरमारभ्य यावद्देहलिविघ्नपम् ।
सूत्रं संस्थाप्य तद्दिक्षु भ्रामयेन्मण्डलाकृति ॥
तत्र या जायते रेखा तन्मध्ये क्षेत्रमुत्तमम् ।
काशीति यद्विदुर्देवास्तत्र मुक्तिः प्रतिष्ठिता ॥
काश्यन्तः परमं क्षेत्रं विशेषफलसाधनम् ।
वाराणसीति यत्ख्यातं तन्मानं निगदामि वः ॥
दक्षिणोत्तरयोर्नद्यौ वरणासिश्च पूर्वतः ।
जाह्नवी पश्चिमे चापि पाशपाणिर्गणेश्वरः ॥
तस्या अन्तःस्थितं दिव्यं विशेषफलसाधनम् ।
अविमुक्तमिति ख्यातं तन्मानं च ब्रवीमि वः ॥
विश्वेश्वराच्चतुर्दिक्षु धनुःशतयुगोन्मितम् ।
अविमुक्ताभिधं क्षेत्रं मुक्तिस्तत्र न संशयः ॥

गोकर्णेशः पश्चिमे पूर्वतश्च
गङ्गामध्यमुत्तरे भारभूतः ।

---

(१) 'शयनम्' ख. पाठः ।

ब्रह्मेशानो दक्षिणे संप्रदिष्ट-
स्तत्तु प्रोक्तं भवनं विश्वभर्त्तुः ॥
चतुर्विधेऽपि क्षेत्रेऽस्मिन् प्रमीतो गर्भयातनाम् ।
नैवाप्नोति मुनिश्रेष्ठ विशेषोऽयं परः स्मृतः ॥
काश्यां मृतस्तु सालोक्यं साक्षात्प्राप्नोति सत्तमः ।
वाराणस्यां मृतो जन्तुः साक्षात्सारूप्यमश्नुते ॥
अविमुक्ते विपन्नस्तु साक्षात्सान्निध्यमाप्नुयात् ।
ततश्चिदानन्दमये ब्रह्मण्येव विलीयते ॥

ततः तदन्तर्गतेऽन्तर्गृहे ।

सलोकतां सरूपतां सान्निध्यं चापि सत्तमः ॥
कल्पकालमवाप्नोति ततो ब्रह्मात्मको भवेत् ।
चतुर्धावितते क्षेत्रे सर्वत्र भगवान् शिवः ॥
व्याचष्टे तारकं वाक्यं ब्रह्मैक्यप्रतिबोधकम् ।
तथापि तत्तत्सामर्थ्यात्तत्र तत्र मृतस्य हि ॥
भोगपूर्वापवर्गाप्तिर्जीवन्मुक्तिदशैव सा ।
किमत्र चित्रं विप्रेन्द्राः काश्यां मुक्तिसमागमे ॥
भागीरथीविमिश्रायां तीर्थसामर्थ्यसम्पदि ।
केवला जाह्नवी विप्रा ज्ञाताऽज्ञाताऽथवा पुनः ॥
अपवर्गं वितरति स्वतोऽपि त्यक्तदेहिनः ।
यस्य कस्यापि वा जन्तोर्भागीरथ्यां गतायुषः ॥
न दुर्लभो ब्रह्मभावस्तत्सङ्गक्षपितांहसः ।
चिदानन्दमयं ब्रह्म गङ्गाभावमुपागतम् ॥
ब्रवीमि सत्यमेवैतन्नात्र वः संशयो भवेत् ।
इयं सोमोद्भवा पुण्या सरितोऽन्याश्च या भुवि ॥
ताः सर्वा जाह्नवीनीरव्याप्लुता एव पाविकाः ।
एवंप्रभावा निर्वाणं तोयराशिवहा नदी ॥

भागीरथीतिविख्याता क्षेत्रे शम्भोर्विमुक्तिदे ।
एकैकमपि विप्रेन्द्राः साक्षाद्ब्रह्माप्तिसाधनम् ॥
न चित्रमत्र द्वितयं यन्निर्वाणाय कल्पते ।
ईदृशी स्वर्नदी यत्र सर्वतीर्थमयी शुभा ॥
तां काशीं को न सेवेत भीमसंसारमुक्तये ॥

इति पाद्मकाशीमाहात्म्यसारः ।

काश्या अन्तर्धानानन्तर्धानविचार :—

ननु हरिवंशे काशीमुपक्रम्य—

अकस्माच्च पुरी सा तु विद्रुता सर्वतो दिशम् ।
तस्यां पुर्यां ततो देवो निर्ममे पदमात्मनः ॥

पदं–पार्वतीवासयोग्यमन्तःपुरम् (१) ।

रमते तत्र वै देवो रममाणो गिरेः सुताम् ॥
न रतिं तत्र वै देवी लभते गृहविस्मयात् ॥

कलौ पापिनामपि मुक्तिदानेनाविवेककृतविस्मयादित्यर्थः ।

वसाम्यत्र न पुर्यां तु देवी देवमथाब्रवीत् ।

देव उवाच ।

नाहं वेश्मनि वत्स्यामि अविमुक्तं हि मे गृहम् ॥

वेश्मनि त्वत्पितृगेहे ।

नाहं तत्र गमिष्यामि गच्छ देवि गृहं प्रति ॥

पितृगृहं प्रतीत्यर्थः ।

हसन्नुवाच भगवांस्त्र्यम्बकस्त्रिपुरान्तकः ।
तस्मात्तदविमुक्तं हि प्रोक्तं देवेन वै स्वयम् ॥
यस्मिन्वसति वै देवः सर्वदेवनमस्कृतः ।
युगेषु त्रिषु धर्मात्मा सह देव्या महेश्वरः ॥

---

(१) 'पदम्-आत्मवासयोग्यमन्तःपुरम्' इति ख. पाठः ।

अन्तर्धानं कलौ याति तत्पुरं हि महात्मनः।

अन्तर्हिते पुरे तस्मिन्पुरी तु वसते पुनः॥

इति सन्दर्भेण कलौ काश्या अन्तर्धानोक्तेः का तस्यां मुक्तिकथेति चेन्न-तत्पुरशब्देन निर्ममे पदमात्मन इत्युक्तपदस्यैवाभिधानेन काश्या अन्तर्धानकथाया एवाभावात्।

(हरिवंशे (१) एकोनविंशे दिवोदासमुपक्रम्य अकस्मादिति। पदं-मोक्षलक्ष्मीविलासाख्यं देवः स्वरूपानुरूपे तत्र रमते देवी तु माया-स्वरूपा स्वोच्छेदहेतौ तत्र न रमत इति भावः। गृहविस्मयात्- गृहे अविमुक्ते यो विस्मय आश्चर्यमनधिकारिणामपि मुक्तिप्रदानं तस्मा-द्धेतोर्न रमते अत्र पुर्यामिति संबन्धः सार्धः अहं नित्यमुक्त ईश्वरो वेश्म गृहं शरीराख्यं न निवत्स्यामि निवासयितुं नेच्छामि हि यस्मान्मे मम गृहमविमुक्तं कालत्रयेऽपि न मुक्तमहेयानुपादेयस्वरूपत्वात् तदेव प्रत्यक् चैतन्यं मम गृहं स्वे महिम्नि प्रतिष्ठितोहं देहे न प्रतिष्ठो भविष्यामीत्यर्थः तत्र-त्वदिष्टे संसारप्रदेशे। गृहे-त्वत्पितृगृहे इति कथापक्षे, अन्यथा त्वमेव देहं प्राप्नुहि अहं तु असङ्ग एवास्मीत्यर्थः। एतेन काशीत्याग एव संसारस्वीकारः तदत्याग एव मोक्षाख्यस्वरूप-स्थितिरिति दर्शितम्। त्रीणि श्रवणमनननिदिध्यासनानि अम्बकानि नेत्राणीव ज्ञापकानि यस्य स त्र्यम्बकः तथा च श्रुतिः 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति आत्मदर्शनसाधन-त्वेन श्रवणादित्रयं विधत्ते। अत एव त्रिपुरान्तकः त्रयाणां स्थूलसू-क्ष्मकारणानां पुराणां शरीराणामन्तकः प्रविलापनकर्ता विद्यास्वरूपा-थ्येषा पुरतत्त्वं न जानातीति हसन् यस्मान्महादेवेन अविमुक्तं हि मे गृहमित्युक्तं तस्मादविमुक्तसंज्ञं वाराणसीक्षेत्रम्। अत्राप्रकृतस्याविमु-

(१) ( ) एतादृशरेखामध्यस्थः पाठः केवलं ख पुस्तके दृश्यतेऽपेक्षितश्चेति निवेशितः।

कस्य कीर्तनमुपरिधारणन्यायेन (१) वाराणस्या मुख्यमविमुक्तत्वं दर्शयति। तथाहि जाबालाः 'सोऽविमुक्ते प्रतिष्ठित इत्यविमुक्तप्रतिष्ठत्वमात्मन उपक्षिप्य कुत्र तदविमुक्तमित्याकाङ्क्षायां वरणायाश्च नाश्याश्च मध्ये प्रतिष्ठित इत्याधिभौतिकमविमुक्तमुक्त्वा कतमच्चास्य स्थानं भ्रुवोर्घ्राणस्य च यः संधिरिति प्रश्नपूर्वकं शरीरे तत्स्थानं भ्रूघ्राणसंधिरित्यामनन्ति अन्तर्धानमिति सार्धः पुरमस्यास्तीति पुरी महादेवः अन्तर्हितायामपि पुर्यां स्वयमनन्तर्हितः सन्वसति देवताप्रतिमाद्युच्छेदेऽपि देवतासान्निध्यं न निवर्तत इत्यर्थः। पुनः कृतयुगारम्भे पुरी वसते इति व्याख्यानेऽपि अन्तर्धानमात्रं पुर्या उक्तं नतूच्छेदः एवं पुरपतेरपीतिद्रष्टव्यम्। किं च यावत्कलेः संध्यां सोऽस्ति तावदत्र द्वापरधर्माणां कियतामप्यनुवृत्तेः। षट्त्रिंशत्सहस्रवत्सरपर्यन्तं कलावपि पुरी नान्तर्हिता भवति। तन्निवृत्तौ केवलस्य कलेः प्रवृत्तौ सत्यामेव च भवति अन्यथा संप्रत्युपलम्भो न युज्येतेति दिक्।

हरिवंशे चतुर्विंशे पितृकल्पप्रसङ्गेन—

सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ।
चक्रवाकाः शरद्द्वीपे हंसाः सरसि मानसे॥
तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः।
प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ॥

---

(१) उपरिधारणन्यायेनेति। प्रेताग्निहोत्रे श्रूयते 'अधस्तात्समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इति अत्र "पित्र्यं हविर्होतुं हस्ते धारयन्यदा मन्त्रं पठति तदानीं स्रुग्दण्डस्याधस्तात्समिधं धारयेत्" इति यद्विधीयेत तदेतद्दैविकेनोपरिधारणेन स्तूयते हिशब्देन अनुवादत्वप्रतीतेरिति चेत् मैवम् दैविके हविषि स्रुग्दण्डस्योपरि समिद्धारणस्यापूर्वार्थत्वेन विधातव्यत्वात् अनुवादत्वगमको हिशब्दोऽसम्भवादुपेक्षणीयः इति न्यायमालाविस्तरे उपरिधारणन्यायः उक्तः। अयम्भावः यथाऽप्रकृतं देवहविष उपरिधारणं कीर्त्यमानम् प्रेताग्निहोत्रे हविष उपरिधारणं विधत्ते तथाऽप्रकृतस्याविमुक्तस्य कीर्तनं प्रकृतवाराणस्या मुख्यमविमुक्तत्वं बोधयतीति तत्त्वम्।

तेषां मध्येऽभिजाताः कुलीनाश्चत्वारो वयमितिशेषः। अवसीदथ योगाद्भ्रष्टतया विशीर्णाः स्थेत्यर्थः ।)

दृष्ट्वा कलियुगं घोरं हाहाभूतमचेतनम् ।
येऽविमुक्तं न मुञ्चन्ति कृतार्थास्ते नरा भुवि ॥

इतिमात्स्योक्तेः ।

कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी ।
कलौ भागीरथी गङ्गा दानं कलियुगे महत् ॥

इतिब्रह्मवैवर्तोक्तेश्च ।

एवं व्याख्यानस्यैवौचित्याच्च ।

श्मशानसंस्थितं वेश्म दिव्यमन्तर्हितं च यत् ।
भूलोकेनैव संयुक्तमन्तरिक्षे शिवालयम् ॥
अयुक्तास्तन्न पश्यन्ति युक्ताः पश्यन्ति चेतसा ॥

इतिमात्स्योक्तेश्च ।

श्मशानं काशी । तत्र स्थितं वेश्म-उक्तं पदम् । तस्यान्तर्धानं न तु काश्या इति स्पष्टं ततः प्रतीतेः । भवान्या तस्य त्यागे तदर्थनिर्मित-पुरस्यान्तर्धानौचित्याच्च ।

यत्तु कालिकापुराणे—

वाराणसी नाम पुरी गङ्गातीरे मनोहरा ।
वरणायास्तथैवासेर्मध्ये चापाकृतिः सदा ॥
स्वयं वृषध्वजस्तत्र नित्यं वसति योगिनाम् ।
दयाप्रीतिकरो योगी स्वयञ्चाप्यात्मचिन्तकः ॥
वियत्स्था सा पुरी नित्यं तेन योगबलाद् धृता ।
दिव्यं ज्ञानं ददात्येव तत्र यो म्रियते जनः ॥
तस्मै स्वयं महादेवः संसारग्रन्थिमुक्तये ।
स भूत्वा परमो योगी मृतस्तत्र भवान्तरे ॥

येन तेनैव निर्वाणमाप्नोति हरशासनात् ।
योगयुक्तो महादेवः पार्वत्या रहितः सदा ॥
देवगन्धर्वयक्षाणां मनुष्याणां च नित्यशः ।
ज्ञेयो हरः प्रकाशश्च क्षेत्रं तच्च प्रकाशितम् ॥
न तत्र कामदो देवो नाचिरात्सम्प्रसीदति ।
आराधितः शिवस्तत्र निर्वाणाय प्रसीदति ॥
गौर्या विवर्जिता सा तु पुरी तत्र न गच्छति ।
योगस्थानं महाक्षेत्रं कदाचिदपि शाङ्करी ॥

इत्युक्तम् । तत्रापि कलाविति शेषः हरिवंशैकवाक्यत्वात् ।

यत्तु आदित्यपुराणे (१)—

गच्छ वाराणसीं व्यास यत्र विश्वेश्वरः शिवः ॥
न तत्र युगधर्मोऽस्ति नैव लग्ना वसुन्धरा ।
विश्वेश्वरस्य यल्लिङ्गं ज्योतिर्लिङ्गं तदुच्यते ॥
यस्मिन्दृष्टे क्षणाज्जन्तुः संसारं न पुनर्विशेत् । इति ।

तदपि शिवनिर्मितस्वपदाभिप्रायम् । यत्र पदेऽन्तर्वर्त्तिनि पुरे युगधर्मः पुण्यपापकृतो मोक्षप्रतिबन्धो नास्तीत्यर्थः ।

यत्त्वेकाम्रवनमाहात्म्ये—'कलावन्तर्हिता काशी मुक्तिरत्रैव लभ्यते' इति तत्रापि काशीपदं तदन्तर्वर्त्तिशिवनिर्मितपदपरम् (२) । यद्वा तत्क्षेत्रस्तुतिपरम् ।

मोक्षस्वरूपनिरूपणम्—

मोक्षश्चोपाधिभेदादनेकजीवभावं प्राप्तस्य चेतनस्योपाधिविगमेन स्वस्वरूपेऽवस्थानम् । चेतनश्चैक एव ।

---

(१) यत्तु इत्यारभ्य इत्यर्थः इत्यन्तः पाठो न संलगति ।

(२) परमित्यग्रे 'यद्यपीत्यादिः तथापि अत्रैव काश्यामेव मुक्तिरित्यर्थ': इति ख. पाठः ।

'विभेदजनकेऽज्ञाने नाशमात्यन्तिके गते ॥
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति' ।

इतिविष्णुपुराणोक्तेः ।

सर्वस्याधारमचिन्त्यरूप-
मणोरणीयांसमतिप्रमाणम् ।
सितासितं चेश्वरमीश्वराणा-
माराधयिष्ये तपसैव विष्णुम् ॥

इतिप्रघट्टकान्तरे तत्रैवोक्तेश्च ।

सितं बद्धं जीवरूपेणासितमबद्धमीश्वररूपेणेत्यर्थः ।

बहवः पुरुषा लोके सांख्ययोगविचारणे ॥
समासतस्तु वै व्यासः पुरुषैकत्वमुक्तवान् ।

इतिमोक्षधर्मे भारतोक्तेश्च ।

तत्रैव

आत्मा च परमात्मा च नमस्ते नलिनेक्षण ॥
विदितोऽसि दुराधर्ष नारदाद्देवलात्तथा ।

इतिकृष्णं प्रत्यर्जुनोक्तेश्च ।

गीतायामपि—

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ इति ॥

स एव शिवनारायणादित्यपदाभिधेयः । ब्रह्मोपनिषदि—'तुरीयमक्षरमादित्यो विष्णुश्चेतिश्रुतेः ।

कौर्मे उत्तरभागे ब्रह्मादिशक्तिकथनानन्तरम्-

आभ्यः परस्ताद्भगवान्परमात्मा सनातनः ।
गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः ॥

एनमेके वदन्त्यग्निं नारायणमथापरे। इत्युक्तेश्च।

तीर्थेषु केषु द्रष्टव्या तोतव्या कैश्च नामभिः॥ इति सतीं प्रति दक्षप्रश्ने—

सर्वदा सर्वभूतेषु द्रष्टव्या सर्वतो भुवि।
सर्वलोकेषु यत्किञ्चिदस्ति तन्न मया विना॥
वाराणस्यां विशालाक्षी प्रयागे ललिता तथा।

इत्युपक्रम्य—

रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने।

इतिमात्स्योक्तेश्च।

तादृशज्ञानं चेश्वरार्पणबुद्धया कृतैः कर्मभिश्चित्तशुद्धयाऽन्यत्रापि भवति। ईश्वरे कर्मसमर्पणं च-

कामतोऽकामतो वापि यत्करोमि शुभाशुभम्।
तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम्॥

इतिचिन्तनम्।

नाहं कर्त्ता सर्वमेतद् ब्रह्मैव कुरुते तथा।
एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः॥

इतिकौर्मात्।

भगवद्गीतायामपि—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥
तस्मादसक्तः सततं कार्यं कर्म समाचार।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः॥

असक्तः—फलकमनाकर्त्तृत्वाभिमानरहितः। कार्यमवश्यंकार्यम्। यज्ञो विष्णुः। सङ्गः कर्तृत्वाभिमानः। तदर्थत्वं च कर्मणां तत्प्रेरणया कर्मकरणात्।

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥

अध्यात्मचेतसा—अहमन्तर्यामिभगवदधीनस्तस्मा एव राज्ञे भृत्य इव कर्माणि करोमीतिबुद्धया ।

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

इति ।

तथा—

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥

अर्चा च— तस्य तत्प्रेरितत्वबुद्धया कर्मकरणम् ।

तथा— मन्मनाभव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ इति ।

सर्वकर्मकरणवेलायां मन्मनाः-भगवत्प्रेरणया करोमीति बुद्धि-मान् । अत एव भद्भक्तो-भृत्य इव राज्ञो मदाज्ञापालकः । अत एव तैः कर्मभिर्मद्याजी मत्पूजको मां नमस्कुरु अकृतदुष्कृतजदोषपरि-हाराय । तदेवाह—

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ इति

परित्यागः स्वस्य कर्तृत्वाभिमानत्यागात् । शरणत्वं मत्प्रे-रणया प्रवर्त्तमानत्वात् । एवं सर्वकर्मफलानामीश्वरो भोक्तेति चिन्तनं सर्वकर्मफलसंन्यासः ।

ईश्वरेण नियुक्ता हि साध्वसाधु च भारत ।
कुर्वन्ति पुरुषाः कर्म फलमीश्वरगामि तत् ॥

न चैतदिष्टं कौन्तेय यदन्येन कृतं फलम् ।
प्राप्नुयादिति तस्माच्चापीश्वरे तन्निवेशय ॥

इतिराजधर्मोक्तेः ।

यदन्येन कृतं कर्म तस्य फलमन्यः प्राप्नुयादिति यत्तन्नेष्टमित्यर्थः । प्रघट्टकान्तरे—

न हि कश्चित्स्वयंमर्त्यः स्ववशः कुरुते क्रियाः ।
ईश्वरेण नियुक्तोऽयं साध्वसाधु च पाण्डव ॥
करोति पुरुषः कर्म तत्र का परिदेवना ।

इति युधिष्ठिरं प्रति व्यासवाक्यम् । ईश्वरस्य तत्फलभोक्तृत्वं च जीवैः कर्माणि कारयतस्तस्य प्रीतिरेव यथाऽर्थिभ्यो धनानि यच्छन् दाता तद्धनभोक्तेत्यलं पल्लवितेन ।

इतिकाशीमुक्तिनिर्णयः ।

## इति काशीप्रकरणम् ।

---

## अथ गयाप्रकरणम् ।

गयायां श्राद्धेन तु अमुक्ते पित्रादौ नरकोद्धारसर्वपापनाशस्वर्गलोकप्राप्त्यादि यथायथं फलम् । मुक्तेऽपि पित्रादौ प्रत्यवायाभावः ब्रह्महत्यादिपापनाशः, सत्यां कामनायां पुत्रादि च कर्तृगतं फलम् । तत्र पित्रुद्धारार्थं कृतेनैव गयाश्राद्धेन सत्यां कामनायां पुत्राद्यपि फलमित्येके । फलद्वयार्थं प्रयोगद्वयमित्यन्ये ।

गयाश्राद्धं पुत्रस्य नित्यम्—

गयाभिगमनं कर्त्तुं यः शक्तो नाभिगच्छति ।
शोचन्ति पितरस्तं वै वृथा तस्य परिश्रमः ॥

इतिकौर्मे निन्दाश्रवणात् । तत्र सकृत्करणमेव नित्यम् । पुनः करणे तु फलाधिक्यं न त्वावश्यकता । तत्रापि येषां प्रथमयात्रायां प्रेतत्व-

निवृत्त्यर्थं प्रेतशिलायां पिण्डदानं भाण्डस्फोटनं च कृतं तेषां द्वितीयादियात्रासु न कार्यम् ।

काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः ।
गयां यास्यति यः कश्चित्सोऽस्मान्संतारयिष्यति ॥

इतिबृहस्पतिः ।

कृष्णशुक्लावुभौ पक्षौ गयायां यो वसेन्नृप ।
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ॥

अनेन मासं वास उक्तः ।

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा ।
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥

इतिवायवीये ।

कुरुक्षेत्रमत्र काशी ।

पितृक्षेत्रं गयानाम सर्वतीर्थाधिकं मतम् ॥

अत्र नरकभोगफलकं प्रारब्धमपि कर्म गयाश्राद्धेन नाश्यते वचनबलादिति केचित् ।

मुण्डपृष्ठाच्च पूर्वस्मिन्दक्षिणे पश्चिमोत्तरे ।
सार्द्धक्रोशद्वयं मानं गयेति परिकीर्त्तितम् ॥
पञ्चक्रोशं गयाक्षेत्रं गयाशिर इ ( तीर्यते ) ।

इति वायुपुराणे ।

गयाश्राद्धविधानार्थं मुक्त्वा यः कीकटं व्रजेत् ।
पापीयान् जायते सद्यो मृतश्चेद्गर्दभो भवेत् ॥
दृष्टार्थगमने दोषस्तीर्थाद्यर्थं न दुष्यति ।
न जातु देशदोषोऽस्ति तीर्थे क्षेत्रे च दैवते ॥

वायुपुराणे—

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कार्पटीवेषं ग्रामस्यापि प्रदक्षिणम् ॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ।
कृत्वा प्रतिदिनं गच्छेत् प्रतिग्रहविवर्जितः ॥ इति ।

श्राद्धमत्र घृतप्रधानद्रव्यकं गयाश्राद्धवदखिलदेवताकमेतत् । षड्दैवत्यं वा । गयायां पक्षत्रयवासः क्वचिदुक्तः । क्वचिन्मासवासः । आमरणं वासोऽत्राधिकप्रशस्तः । ब्रह्मज्ञानाद्यथा मुक्तिस्तथाऽत्र मरणाद्भवेत् ॥ इत्युक्तेः । मुक्तिः सालोक्यमत्र बोध्यम् ॥

अथ गयायात्राधिकारिणः—

तत्र पुत्रादयोऽधिकारिणो मित्रपर्यन्ताः । पुत्रानुजादीनां पिण्डदानेऽपि पित्रग्रजादीनामत्राधिकारः । सवर्णज्ञातिमित्रबान्धवसुहृदां चाधिकारः । यतेस्तु दण्डस्पर्शनमात्रं पितृस्मरणपूर्वकं विहितम् । जीवत्पितृकस्तु प्रसङ्गतो गयां गत्वा मातृपार्वणं कुर्यात् । तदुद्देशेन तु गमनं न तस्य । यो यद्धनग्राही सोऽपि तच्छ्राद्धं गयायां कुर्यात् । भृत्यऋद्धणिकयोरपि अधिकारः ।

महालये गयाश्राद्धे प्रेतश्राद्धे दशाह्निके ।
पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्त्तयेत् ॥

वृद्धिश्राद्ध (१) प्रीतिश्राद्धसपिण्डीकरणेषु नाभिश्रवणजपः ।

अथ पिण्डद्रव्याणि—

पिण्डद्रव्याणि पायसचरुयवसक्तुतण्डुल (२) मूलफलादीनि । पूर्वाभावे उत्तरोत्तरम् । पिण्याकतिलगुडादीनि वा । तिलाज्यमधु-

(१) वृद्धिश्राद्धगयाश्राद्धप्रीतिश्राद्धसपिण्डीकरणेषु इति ख. पाठः ।

(२) तण्डुलेत्यनन्तरं पिष्टतण्डुलेत्यधिकः पाठः ख. पुस्तके ।

दध्यादिपिण्डेषु योजयेत् । पिण्डप्रमाणं मुष्टिरार्द्रामलकं शमीपत्रं वा सर्वथाऽशक्तौ शमीपत्रप्रमाणं गयायाम् ।

अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ।
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ॥

इतिवायवीये ।

गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः । इति च ।

संक्रान्त्यादिर्ग्रहणं च प्रशस्तम् । कृष्णपक्षश्च प्रशस्तः । मकरः प्रशस्ततरः ।

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
अब्दमध्ये (१) न कुर्वीत सपिण्डीकरणं विना ॥

इतिगारुडे ।

प्रथमेऽब्दे न कुर्वीत कृतेऽपि तु सपिण्डने ।

इत्यन्ये उत्तरार्धं पठन्ति । तदपवादं च अस्थिक्षेपमित्यादि पूर्ववत् । प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान्सुतः । इतिपठन्ति । अब्दमध्येऽपि गयाश्राद्धं देवतात्वसिद्धये देवतासंस्कारकं तद्दैवत्यमेव पार्वणं भक्तयाख्यं श्राद्धं कृत्वा स एव भक्त्याख्यश्राद्धवान् गयाश्राद्धादि कुर्वीतेत्यर्थं काश्चित् । यथाश्रुतमर्थमन्ये । पतितानामपि गयायां पिण्डदानं वर्षोत्तरं कार्यम् ।

महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुतः ॥ इतिसङ्ग्रहे ।

उद्वाहो वृद्धिश्राद्धनिमित्तोपलक्षणम् ।

उपरागे व्यतीपाते गयायामथ पर्वणि ॥
पितृपक्षे च यज्ञे च गयायां च महालये ।
निषिद्धेऽपि दिने कुर्यात्तिलयुक्तं तु तर्पणम् ॥ इति ।

---

(१) अब्दमध्ये इत्यस्य स्थाने प्रथमेऽब्दे इति ख. पाठः ।

अत्र पितृपार्वणमातृपार्वणमातामहपार्वणमातामहीपार्वणानि कार्याणि । पितृव्यादिभ्योऽपि देयं तत्पत्नीभ्योऽपि भर्तृपिण्डात्पृथगेव पिण्डाः । सम्बन्धं विनाप्यत्र स्मर्यमाणेभ्यः पिण्डदानम् ।

यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥

इत्युक्तेः । षड्दैवत्यमेवावश्यकमित्यन्ये । अत्र पक्षे मातामहानां सपत्नीकानामित्युल्लेख इतिस्मृत्यर्थसारे । मात्रा सह नवदैवत्यमित्यपि तत्र आत्मनोऽप्यत्र तिलकुशहीनं पिण्डदानं जनार्दनहस्ते एव कार्यम् । अन्यस्यापि जीवत एवमेव पिण्डदानं कार्यमिति स्पष्टं वायवीये । इदं जीवतः पिण्डदानम् पुत्रादेरेवेति केचित् । तत्र मूलं मृग्यम् । गयायां निर्गुणा अपि तत्रत्या विप्रा एव भोजनीया इति हेमाद्रिः । अक्षय्यवट-स्नानतर्पणश्राद्धादि कृत्वा तद्दिने श्राद्धे एव तेषां भोजनमाचारादित्यन्ये । गयाप्रवेशदिने फलं वाञ्छन् प्रेतशिलायां सघृतचरुणा श्राद्धं प्रेतशिला श्राद्धेन प्रेतत्वविमोके श्राद्धान्तरोद्देश्यत्वयोग्यता भवति । तत्रैव रामतीर्थे स्नानपिण्डादि प्रेतत्वविमोचकम् ।

यमराजभ्रम(धर्म)राजयोः श्यामशवलयोश्चात्र पिण्डदानम् । तत्रैव प्रभासे साग्रे ? याम्यो वलिर्देयः । गयाप्राप्तिनिमित्तकौ मुण्डनोपवासौ नेत्युक्तम् । द्वितीयदिने प्रेतपर्वते श्राद्धं ततस्तत्रत्यब्रह्मकुण्डे श्राद्धं कार्यम् । इदं सर्वं गयाश्राद्धप्रकृतिभूतम् । तृतीयदिने पञ्चतीर्थौ तत्रादावुत्तरमानसाख्ये सूर्यकुण्डे स्नानश्राद्धादि । ततो दक्षिणमानसे तत् । तत्रैव मध्ये कनखलाख्यं तीर्थम् । उत्तरे उदीचीतीर्थं च । ततः फल्गु-तीर्थे स्नानादि । तत्रैव पितामहं नमः शिवायेति नत्वा गदाधरं पश्येत् चतुर्थदिने धर्मारण्यं गत्वा मतङ्गवाप्यां स्नानादि । तत्र मतङ्गेशनतिः । तत्रैव ब्रह्मतीर्थे कूपे श्राद्धादि । तत्कूपयूपयोर्मध्ये च धर्मधर्मेश्वरौ नत्वा महाबोधितरुं नमेत् । पञ्चमे दिने ब्रह्मसरितः स्नानश्राद्धादि । तत्रैव गोप्रचारसमीपस्थाम्रमूले पितृतर्पणम् । तत्रैव ब्रह्मयूपप्रदक्षिणम् ब्रह्मनमस्कारो यमवलिः श्ववलिः काकवलिश्च ततः स्नानम् ।

ततः षष्ठेह्नि नित्यस्नानविधिना फल्गुस्नानम् । ततो गयाशिरःस्थपदेषु स्नानम् । पदानि च विष्णुरुद्रब्रह्मकश्यपपञ्चाग्नीन्द्रागस्त्यरविचन्द्रगणेशेन्द्रकार्त्तिकेयक्रौञ्चानाम् । एषु पदेषु प्रथमे सक्तुपिण्डाः । द्वितीये तिलगुडस्य । तृतीये (१) पायसस्य च । चतुर्थे दुग्धतर्पणम् । पञ्चमे दीपदानमिति पञ्चदिनकृत्यम् । अनवकाशे त्रिषु द्वयोरेकस्मिन्नपि कार्यम् । तदग्रिमदिने गयालोले स्नानश्राद्धादि । ततोऽक्षय्यवटेऽन्नेनैव श्राद्धम् । अत्र ब्रह्मकल्पितगयास्थब्राह्मणानेव पित्रादिस्थाने भोजयेत् ।

ये युष्मान्पूजयिष्यन्ति गयायामागता नराः ।
हव्यैः कव्यैर्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत् ॥

इत्याग्नेयात् ।

तत्र वटेशवटनमस्कारौ । अन्यान्यपि तत्र तीर्थानि तत्र गायत्रीतीर्थसावित्रीतीर्थसरस्वतीतीर्थेषु सन्ध्यात्रयानुष्ठानम् । विशालालेलिहानभरताश्रयपादाङ्कितमुण्डपृष्ठाकाशगङ्गागिरिकर्णमुखवैतरणीगोप्रचारघृतकुल्यामधुकुल्यामरकोटितीर्थरुक्मकुण्डपाण्डुशिलाचम्पकवनदेविकामहानदीदशाश्वमेधहंसतीर्थमातङ्गपदमथोकुण्डगयाकूपमार्त्तण्डपादकूपभस्मकूपधौतपादरामपुष्करिणीसुषुम्नामहाकालीवशिष्ठेश्वरतीर्थकामधेनुपदाङ्कितधेनुकारण्यकर्दमालयगयानाभिफल्गुचण्डीस्मशानसंगयागजगयादित्यपुण्डरीकाक्षभरताश्रमस्थरामकुण्डपर्वतोद्यन्तकाद्रिउद्यन्तकुण्डवैकुण्ठलोहदण्डहेमकूटगृध्रवटगृध्रगुहाऋणमोक्षपापमोक्षशिलोदरगजगणेशमुण्डपृष्ठारविन्दान्द्रयरविन्दवनक्रौञ्चपादादीनि ।

## इतिगयाप्रकरणम् ।

इति श्रीशिवभट्टसुत सतीगर्भज नागोजीभट्ट
कृतस्तीर्थेन्दुशेखरःसमाप्तः ।

---

(१) तृतीये यावस्य इति ख. पाठः ।

# काशिमृतिमोक्षविचारस्य भूमिका ।

—:○०○:—

अस्य काशीमृतिमोक्षविचारस्य रचयिता सुगृहीतनामधेयः परमहंसपरिव्राजकाचार्यः श्रीसुरेश्वराचार्यः । एतत्प्रणीता ग्रन्थाश्च बृहदारण्यवार्तिकम्, तैत्तरीयोपनिषद्भाष्यवार्तिकम्, दक्षिणामूर्तिस्तोत्रवार्तिकम्, नैष्कर्म्यसिद्धिश्चेति अयमेवपूर्वाश्रमे मण्डनमिश्र इति ख्यातिमाप इति बहवः परन्तु सुरेश्वराचार्यो विधिविवेक, भावनाविवेक, विभ्रमविवेक, स्फोटसिद्धि, ब्रह्मसिद्धिकर्तुर्मण्डनमिश्रादन्य एव भवभूतिरेव मण्डनमिश्र इति बहूनां मतं तदपि निर्मूलम् ।

प्रकृतस्य काशीमृतिमोक्षविचारस्य कर्ता कश्चिदन्य एव सुरेश्वराचार्य इति प्रतीयते यतोऽत्र प्रमाणतया संक्षेपशारीरकस्थं वचनमुपन्यस्तम् । संक्षेपशारीरकं च सुरेश्वराचार्यशिष्यसर्वज्ञमुनिकृतम् ।

वस्तुतस्तु संक्षेपशारीरकस्थं वचनं कैश्चिन्मूले प्रक्षिप्तम् यतः स्वमतपोषणाय श्रुतिस्मृतिवाक्यान्युद्धरन्नयं ग्रन्थकारः कथंकारमाधुनिकग्रन्थस्थं वचनमुपन्यस्येत एवं च अस्यापि ग्रन्थस्य प्रसिद्धसुरेश्वराचार्यकृतित्वे न विवाद इत्युत्पश्यामः ।

इदं पुस्तकं च वारद्वयं प्राप्तमुद्रणमपि अशुद्धिबहुलमिति महामहोपाध्याय–प्राच्यप्रतीच्योभयदर्शननिष्णात वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यक्ष श्रीगोपीनाथकविराज एम. ए. महोदयानामाज्ञया संशोध्य प्रकाश्यते तदनेन व्यापारेण काशीविश्वेश्वरः प्रीयतामिति ।

तत्र तावद्विदुषां मनोविनोदाय काशीपदार्थो निरूप्यते—काशते-ऽनाख्येयं ज्योतिरत्रेति काशी—"काशतेऽत्र यतो ज्योतिरनाख्येयं महेश्वर। अतो नामापरं चास्तु काशीतिप्रथितं विभो" इति काशीखण्डात् तत्परिमाणं च मध्यमेश्वराद् ( गनेशगंज कम्पनीबाग ) देहलीगणेश ( प्रसिद्ध ) पर्यन्तं सूत्रं स्थापयित्वा मण्डलीकृति भ्रामयेत् तन्मध्यस्थं क्षेत्रं काशीत्यभिधीयते।

वरणास्योरन्तरा वाराणसी—"वरणायास्तथैवास्या मध्ये वाराणसी पुरी" इति वचनात्। तत्परिमाणं च दक्षिणे असी उत्तरे वरणा पश्चिमे पाशपाणिविनायकः ( महाल सदरबाजार लैन में ) पूर्वे गङ्गा एतन्मध्यं वाराणसी।

शिवाभ्यां न विमुक्तम्, अविना पापेन मुक्तं, वा अविमुक्तं—"मुने प्रलयकालेऽपि तत्क्षेत्रं न कदाचन। अविमुक्तं शिवाभ्यां यदविमुक्तं ततः स्मृतम्॥ अविशब्देन पापं तु कथ्यते वेदवादिभिः। तेन पापेन तत्क्षेत्रं रहितं वरवर्णिनि॥ इति वचनात्। तत्परिमाणं च विश्वेश्वराच्चतुर्दिक्षु चतुःशतधनुर्मितं क्षेत्रमविमुक्तम्। एतत्क्षेत्रं ज्योतिर्लिङ्गस्वरूपम् "अविमुक्तं महाक्षेत्रं पञ्चक्रोशी परीमितम्। ज्योतिर्लिङ्गं तदेकं हि ज्ञेयं विश्वराभिधम्" इति वचनात्।

गृहस्य इति अन्तर्गृहम्—तत्परिमाणं च पश्चिमे गोकर्णेशः (दपलू की गलीमें) पूर्वे मणिकर्णिकेश्वरः ( गोमठकाकाराम की गली ) उत्तरे मारभूतेश्वरः ( मछरहट्टा गोविन्दपुरा की गली ) दक्षिणे ब्रह्मेश्वरः ( शकरकन्दगली ) एतन्मितमन्तर्गृहम्।

यद्यपि एकाम्रवनमाहात्म्ये कलौ काश्या अन्तर्धानमुक्तं तथापि युगान्तरप्रत्यक्षस्य सुवर्णविविधरत्नघटितस्य विशेषरूपस्य देवदेव निवासस्य ज्योतीरूपस्य अन्तर्धानेऽपि मुक्तिदायाः काशीपुर्या नान्तर्धानम् "कलावन्तर्हितो देवस्तत्पुरं च विशेषतः। पुरी तु वसते नित्यं

सर्वप्राणिविमुक्तिदा" इति वचनात् ।

काश्यां प्रवेशादेव सर्वपापविलयः "अत्र प्रविष्टमात्रस्य जन्तोः पापं पुरार्जितम् । विनाशमाप्नोति परं पुण्यराशिश्च वर्धते" इति वचनात् ।

त्रिरात्रं काशीवासादश्वमेधराजसूययागयोः फलप्राप्तिः काश्यामेकमासवासेन तु यत्र क्वापि मृतस्य पुनः काश्यां जन्म ततो मोक्षः "यत्पुण्यमश्वमेधेन यत्पुण्यं राजसूयतः । काश्यां तत्पुण्यमाप्नोति त्रिरात्रवसनाद्यमी ॥ मासमेकं वसेद्यस्तु लघ्वाहारी जितेन्द्रियः । जन्ममृत्युभयं तीर्त्वा स याति परमां गतिम् ॥ बहुकालमुषित्वापि नियतेन्द्रियमानसः । यद्यन्यत्र विपद्येत दैवयोगात्कुत्रचित्क्वचित् ॥ सोऽपि स्वर्गसुखं भुक्त्वा भूत्वा क्षितिपतीश्वरः । पुनः काशीमवाप्यात्र विन्देन्निःश्रेयसं परम्" ॥ इति वचनात् ।

यो हि अन्यत्र कृतपापः काश्यामागतः काश्यां मृतस्तस्य सद्यो मुक्तिः यस्तु काश्यां कृतपापः काश्यां मृतः स एकैकस्य पापस्य कृते त्रिंशत्सहस्रवर्षपर्यन्तं रुद्रपिशाचतामनाप्य भैरवयातनया निष्कृतपापः मुच्यते यस्तु काश्यां पापं विधायान्यत्र मृतः स यामाख्यशिवगणकृतां यातनामनुभूय मुच्यते सर्वथाऽनयोर्यमयातना न भवति न वा जन्म अयोनिजशरीरेण पापभोगसंभवात् "वाराणस्यां स्थितो यो वै पातकेषुरतः सदा । योनिं प्राप्यापि पैशाचीं वर्षाणामयुतत्रयम् ॥ पुनरत्रैव निवसञ्ज्ञानं प्राप्स्यत्यनुत्तमम् । तेन ज्ञानेन भोगान्त्ये मोक्षमाप्स्यत्यनुत्तमम्" "यदन्यत्रार्जितं पापं तत्काशीदर्शनाद्व्रजेत् । काश्यां तु यत्कृतं पापं तत्पैशाचपदप्रदम् ॥ महापातकसंयुक्तास्त्रिंशदब्दसहस्रकम् । प्रत्येकं प्राप्नुवन्त्येव यातनां कालभैरवीम्" "तस्मान्मृतस्यात्र न सर्वथास्ति पुनर्भवो मृत्युपरिग्रहो वा" "एकेन जन्मना जन्तुर्मोक्षं च प्राप्नुयादिति" "चतुर्विधेऽपि क्षेत्रेऽस्मिन्प्रमीतो गर्भ

यातनाम्। नैवाप्नोति मुनिश्रेष्ठा विषयोऽयं ब्रवीमि वः' इति वचन जातेभ्यः :

तदयं निष्कर्षः योऽन्यत्र कृतपापः काश्यां मृतस्तस्य सद्योमुक्तिः, यः काश्यां कृतपापः काश्यां मृतः सोऽयोनिजशरीरमवाप्य बहुकालं रुद्रपिशाचः सन् भैरवयातनामनुभूय मुच्यते, यः काश्यां कृतपापोऽन्यत्र मृतः सोऽपिअयोनिजं शरीरमवाप्य यामाख्यशिवगणाख्यकृतां यातनामनुभूयमुच्यते यस्तुकाश्यामेकमासकृतवासो बहिर्मृतः स स्वर्गादिसुखं भुक्त्वा पुनःकाश्यां जन्मावाप्य मुच्यते इति। इदं नागोजीभट्ट नारायणभट्टयोर्मतम्।

श्रीसुरेश्वराचार्यास्तु काश्यांमृतौ अनेकजन्मार्जितस्य काशीकृतस्य च पापस्य झटिति कायव्यूहेन भोगं कारयित्वा झटिति मोक्ष इत्याहुः।

काशीकृतपापस्यापि तत्रापि काश्यां मृतस्य सालोक्यरूपा वाराणस्यां मृतस्य सारूप्यलक्षणा अविमुक्ते मृतस्य सान्निध्यरूपा अन्तर्गृहे मृतस्य ब्रह्मण्येव लयरूपा मुक्तिः।

यत्तु काश्यां मृतस्य जन्म इति क्वचिदुक्तं तदर्थवादमात्रम्।

काश्यां स्थावरजङ्गमाः सर्वे मोक्षेऽधिकारिणः जङ्गमेषु प्राणोत्क्रमणं व्यक्तं स्थावरेष्वव्यक्तमेतावान् विशेषः प्राणोत्क्रमणवेलायां सर्वेभ्यो रुद्रस्तारकं ब्रह्म व्याचष्टे ततश्च आत्मज्ञानान्मोक्ष इति तत्त्वम्।

तारकं प्रणवः—"ओङ्कारमोङ्कारयतीन्दुमौलिः" "प्रणवं तारकं ब्रूते काश्यां देवो महेश्वरः" इतिवचनादिति सुरेश्वराचार्याः।

तारकं तत्त्वमसीति महावाक्यम्—"म्रियमाणस्य जन्तोश्च वाक्यं कर्णे समुच्चरन्" "उपदिशति सदान्ते वाक्येमकात्मनिष्ठं द्विजकुलनिरपेक्षो भाव्य तत्राधिकारम्" इतिवचनादिति नागोजीभट्टः।

तारकं रामषडक्षरो मन्त्रः—"आचष्टे तारकं ब्रह्म राममन्त्रं षडक्षरम्" इतिवचनात्।

ननु काश्यां मृतानां चाण्डलादीनां कथं तारकोपदेशः तेषां मन्त्रश्रवणानधिकारादिति चेदुच्यते "द्विजकुलनिरपेक्षो भाव्य तत्राधिकारम्" "श्रावयामास विधिवत्संपाद्याधिकृतिं पराम्" इत्यनेन चाण्डालादीनामप्यधिकारं सम्पाद्य मन्त्रोपदेशात्।

तारकं रामनाम—"श्रीरामरामरामेति एतत्तारकमुच्यते" इतिवचनात् एतत्पक्षेतु चाण्डालादिषु कथमुपदेश इतिशङ्कैव न।

ननु चाण्डालस्याधिकारसंपादनमिह देहे देहान्तरे वा नाद्यः चाण्डालादिदेहे ब्राह्मणत्वाद्यसंभवात् न द्वितीयः शरीरान्तरे मुमूर्षुत्वासंभवेन "मुमूर्षोर्दक्षिणे कर्णे" इत्यस्य बाधप्रसङ्गादिति चेन्न-विश्वेशानुग्रहात्तस्मिन्नेव शरीरे विश्वामित्रस्य ब्राह्मणत्वस्येव द्विजत्वस्य संभवात् स्वतन्त्रेच्छस्य विश्वेश्वरस्य चाण्डालस्यापि मन्त्रोपदेशसंभवाच्चेत्यलम् इति।

सूर्यनारायण शुक्लः।

श्रीविश्वेश्वरः शरणम् ।

## श्रीमत्परमहंसपरिव्राजकाचार्य-

### श्रीजगद्गुरुसुरेश्वराचार्य कृतः

# काशीमृतिमोक्षविचारः ।

---

नमस्कृत्य जगन्नाथं मायया चन्द्रशेखरम् ।
गङ्गाधरं विष(१)च्छायानीलकण्ठमुपास्महे ॥ १ ॥
वाराणसीं पुरीं पुण्यां येऽधितिष्ठन्ति जन्तवः ।
व्याचष्टे तारकं ब्रह्म रुद्रस्तेषां दयानिधिः ॥ २ ॥
प्राणप्रयाणसमये प्राप्य ज्ञानं महेश्वरात् ।
मुच्यन्ते जन्तवः सर्वे बद्धाश्चानाद्यविद्यया (२) ॥ ३ ॥
मोक्षश्च तेषां तादात्म्यं घटेतरखयोरिव ।
पुनर्देहान्तरारम्भे कारणं नास्ति किञ्चन ॥ ४ ॥
सालोक्यादेर्न विद्वद्भिः साक्षान्मोक्षत्वमिष्यते ।
उपास्तेः फलरूपत्वात् (३) तारतम्यपदस्थितेः ॥ ५ ॥
ज्ञानाग्निना विनष्टत्वात् विश्लेषः पूर्वकर्मणाम् ।
उत्तरेषां न च श्लेषो भवेन्मुक्तस्य जीवतः ॥ ६ ॥
प्रारब्धं कर्म भोगेन क्षीयते ऽज्ञानकारणम् ।
ततो विदेहकैवल्यं भवतीति सुनिश्चितम् ॥ ७ ॥

---

(१) 'गर' इति. क. पु. पाठः ।

(२) 'बद्धाः स्वाभाव्यविद्यया' इति अपपाठः ।

(३) पररूपत्वादिति पाठान्तरम् ।

काश्यां विदेहकैवल्यं भवतीति सुनिश्चितम्।

काश्यां विदेहकैवल्यप्राप्तेरुत्तरकर्मणाम् ॥ ८ ॥

असंभवाच्च संश्लेषो वेदितव्यो विचक्षणैः ॥

किमत्र प्रमाणम्? तथाहि श्रूयते "यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति. (छा० उ० ५.२४.३.)। तर्हि पापकर्मणामेव विलयः (१) श्रूयते न पुण्यकर्मणामिति चेत् नेत्याह—

'ब्रह्मादीनां शरीराणि श्वशूकरशरीरवत्।

यतो जिहासितव्यानि (२) तस्माद् धर्मोऽपि पाप्मगीः' ॥

इति वचनात् पुण्यकर्मारब्धानां ब्रह्मेन्द्रादिशरीराणां पापकर्मारब्धश्वशूकरादिशरीरवज्जिहासितत्वाविशेषात् पुण्यस्यापि कर्मण पाप्मत्वेन कीर्तनं युक्तम्। तथा च भगवद्गीतासु श्रूयते—

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन।

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ४.३७ ॥

यच्चोक्तं जीवन्मुक्तस्य ज्ञानोत्तरकालीनकर्मणां श्लेषो न भवतीति तत्रेदं प्रमाणम्—"यथा पुष्करपलाशे आपो न श्लिष्यन्ते, एवं हैवंविदि पापं कर्म न श्लिष्यते' इति। (छा० उ० ४।१४।३)

प्रारब्धस्य च कर्मणः कर्मत्वाविशेषाज् ज्ञानेन बाध्यत्वमुपपद्यते इति चेद् न इत्याह—

प्रारब्धस्योपजीव्यत्वात् तत्त्वज्ञानेन कर्मणः।

अशक्यत्वाच्च मुक्तेषोरिव बाधो न विद्यते ॥ इतिवचनात्।

अथेदानीं परमकृतेः (३) प्रमाणं प्रतिपाद्यते।

यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः।

तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥

(मनुस्मृति ८.९८)

(१) 'विश्लेषः' इति क. पा.।

(२) जिहासितान्येव' इति पाठान्तरम्। (३) 'परमप्रकृतेः' इति क. पा.।

इति गङ्गाकुरुक्षेत्रयोः निषेधमुक्त्वा मुमुक्षुप्राप्यत्वमाह स्म भगवान् आचार्यो मनुः। यत्किंचिन्मनुरवदत्तद्भेषजमितिश्रुतेः। यमः—यमयति—नियमयति। तथा च श्रूयते—"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्य आत्मा शरीरं य आत्मानमन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः" इति॥ ( बृहदारण्यकोपनिषत् ३.७ ) वैवस्वतः-विवस्वान् सविता (१) तमधितिष्ठतीत्यर्थः। राजा—राजते—दीप्यते—स्वयं प्रकाशते।

ज्योतिर्ब्राह्मणवाक्योक्तं ज्योतिष्टुम् प्रत्यगात्मनः।
औपचारिकमन्यत्र भास्यत्वाद् भास्वदादिवत्॥ १॥

इतिवचनात्।

"यस्तवैष हृदि स्थितः" इति स्वानुभवप्रत्यत्वं दर्शयति। "हृदि स्थितः" इति सर्वेषां भूतानां हृद्देशे सदा सन्निहितः। "अन्तः प्रविष्टः शास्ता जनानाम्" (तै० आ० ३.११ १-२) इति श्रुतेः। "शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थितः" इति स्मृतेः। ते—तव यो हृदि स्थितस्तेन परमात्मना अविवादः—ऐकात्म्यं यद्यस्ति तदा गङ्गां मा गमः कुरुक्षेत्रं च मा गमः।

गङ्गायां मरणं चैव दृढा भक्तिश्च केशवे।
ब्रह्मविद्याप्रबोधश्च नाल्पस्य तपसः फलम्॥

इतिसमप्रधानभावेन श्रीव्यासेनोक्तम्।

मरणे स्मरणं विष्णोः कथ्यतेऽत्यन्तदुर्लभम्।
तदल्पेनैव (२) कालेन गङ्गां संसेव्य लभ्यते॥

यस्य तत्त्वज्ञानं नास्ति तस्य गङ्गायां कुरुक्षेत्रे वा यावद्देहावसानं तावत् स्थितौ सत्यां तत्त्वज्ञानावाप्त्या मोक्षो भवतीति भावः।

---

(१) 'विवस्वान् पिता अस्येति' क. पा.।

(२) 'तदन्ते बहुकालेन' पा.।

किं नाम तत् कुरुक्षेत्रं यत्र देहावसाने सर्वस्य जन्तोर्मोक्षः श्रूयते ? उच्यते "बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्। अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । तस्माद् यत्र क्वचन गच्छति तदेव मन्येत तदविमुक्तमेव। इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति तस्मादविमुक्तमेव निषेवेत अविमुक्तं न विमुञ्चेदेवमेवैतद्याज्ञवल्क्य" इति ( जाबालोपनिषत् १ )

बृहस्पतिर्याज्ञवल्क्यं पप्रच्छ यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनं तद्वद इति शेषः । तस्मै याज्ञवल्क्यः प्रत्युवाच अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनं तस्माद् यत्र क्वचन गच्छतीति । विश्वेश्वरेण कदाचिदपि विमुक्तं न भवतीत्यविमुक्तम् । सर्वगतत्वेऽपि विशेषाभिव्यक्तिहेतोर्वै एवार्थः । कुरुक्षेत्रम् कुरुक्षेत्रशब्दितम् । देवानां देवयजनम् सर्वे देवा इज्यन्ते पूज्यन्ते यत्र इति' सर्वे देवा यत्र विश्वेश्वरं यजन्ति पूजयन्ति वेति देवयजनम् । सर्वेषां भूतानां ब्रह्मसदनम्—भवन्तीति भूतानि भवन्ति उत्पद्यन्ते उत्पत्तिमन्ति, कानि तानि ? जरायुजाण्डजस्वेदजोद्भिज्जानि, तेषां सर्वेषां भूतानां ब्रह्मसदनम् ब्रह्मलोकः। तस्मात् अविमुक्ताद् यत्र क्वचन गच्छति यत्र क्वापि न गच्छेत् मोक्षार्थं क्षेत्रान्तरम् "व्यत्ययो बहुलम्" इति लकारव्यत्ययः । अविमुक्तं परित्यज्य क्षेत्रान्तरे मोक्षो न भवतीति भावः । "साक्षान् मोक्षो न चैतासु पुरीषु प्रियभाषिणि" इति । ( का० ख० ८-३ ) स्मृतेः । तदिदं मन्ये देवानां देवयजनम् सर्वेषां भूतानां ब्रह्मसदनम् । तत्–तस्माद्देवानां देवयजनमिदमविमुक्तं सर्वेषां भूतानां ब्रह्मसदनं ब्रह्मलोकं मन्ये अवगच्छामि । अत्र हि जन्तोः प्राणैरुत्क्रममाणस्य रुद्रस्तारकं ब्रह्म व्याचष्टे। अत्र—अविमुक्ते, हि:

प्रसिद्धौ, जन्तोः—चतुर्विधस्य जीवजातस्य, प्राणैरुत्क्रममाणस्य—प्राणैरुत्क्रान्तिं कुर्वतः 'प्राणेषूत्क्रममाणेषु' इति केचित् पठन्ति।

रुद्रः—तापत्रयात्मकं संसारदुःखं—रुत्, दुःखहेतुर्वा—रुत्। रुतं द्रावयतीति—रुद्रः।

रुद् दुःखं दुःखहेतुर्वा द्रावयत्येष नः प्रभुः।
रुद्र इत्युच्यते सद्भिः शिवः परमकारणम्॥ इति
अशुभं द्रावयन् रुद्रो यज्जहार पुनर्भवम्।
ततः स्मृतामिधो रुद्रशब्देनात्राभिधीयते॥ इति च स्मृतेः॥

रुता—वेदरूपया धर्मादीन् बोधयति वा रुद्रः। रुता—प्रणवरूपया स्वात्मानं प्रापयतीति वा रुद्रः। रोरूयमाणो द्रवति—प्रविशति मर्त्यानिति वा रुद्रः। त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्यान् आविवेश इति श्रुतेः। त्रिधाबद्धस्त्रिसत्वनेन बद्धः वृषभः श्रेष्ठः महाँ देवो मर्त्यान् रोरवीति उपदेशशब्दं कुर्वत् आविवेश आसमन्ताज्जीवेषु प्रवेशं करोति। रोधिका बन्धिका मोहिका शक्तिः—रुत्। तां राति आदत्ते द्रावयतीति वा रुद्रः। रुद्वेदस्तं प्रापयति भक्तेभ्य इति वा रुद्रः। रुतं शब्दं वेदात्मानं कल्पादौ ब्रह्मणे ददातीति वा रुद्रः 'यो वै वेदांश्च प्रहिणोति तस्मै' (श्वेता. ६.१८) इति श्रुतेः (१)। एवमादिभिः प्रकारैः बहुधा रुद्रशब्दो निरूप्यते।

तारकम्—तारकः—प्रणवः। तारयतीति तारः स्वार्थे कः प्रत्ययः संसारसागरादुत्तारकं—तारकं च तद् ब्रह्म इति तारकं ब्रह्म उच्यते। "ओमितीदं ब्रह्म" (तै० उ० ११।८) इति श्रुतेः। "ओमित्येतदक्षरमिदं सर्वम्" इति श्रुतेः। (२) "ओमित्येकाक्षरं

(१) यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये॥

(२) ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव। याचान्यत् त्रिकालातीतं तदप्योङ्कार एव॥ (माण्डूकोपनिषद् १)

ब्रह्म"(१)इतिभगवान् व्याचष्टे। उपदिशति-येनासौ अमृतीभूत्वा मोक्षी भवति। येनोपदिष्टेन ज्ञानेनासौ जन्तुरमृतीभूत्वा इत्यत्र अभूततद्भावे च्विः न भवति, स्वतः सिद्धत्वात् अमृतोऽयमविद्यान्तर्हितो मर्त्यभावमापन्नो निवृत्ताज्ञानतत्कार्यो मोक्षीभवति। "मुक्त एव मुक्तो भवति" "ब्रह्मैव सन् ब्रह्माप्येति" (बृह० उ० ४।४।६) "विमुक्तश्च विमुच्यते" इतिश्रुतेः। तस्मात्—ततो हेतोरविमुक्तमेव निषेवेत भजेत। अविमुक्तं न विमुञ्चेत्—न त्यजेदामरणान्तिकम्। एवमेवैतद् याज्ञवल्क्यो बृहस्पतिना पृष्टः सन्नेवमेवैतदवगन्तव्यमित्युवाच याज्ञवल्क्य इत्यर्थः।

प्राणोत्क्रमणं न स्थावरविषयमिति चेत् न इत्याह—"ओषधिवनस्पतयो यच्च किञ्चन प्राणभृत्" इति श्रुतेः—यत् किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत् प्रज्ञाने प्रतिष्ठितम्" इति श्रुतेः(२)। प्राणोत्क्रमणं जङ्गमेष्वभिव्यक्तं, स्थावरेष्वनभिव्यक्तमेतावानेव विशेषः। "भूतानां प्राणिनः श्रेष्ठाः"(३) इति मानवं वाक्यमपि प्राणाभिव्यक्त्यभिप्रायं न प्राणित्वप्रतिपादनपरम्। षड्भावविकारत्वाविशेषात्। प्राणित्वाविशेषात्; स्थूलकारणोपाधिमत्त्वाविशेषात्; जन्तुशब्दत्वाविशेषात्। संसारचक्रे भ्राम्यमाणत्वाविशेषात्। तथा च स्मर्यते—

स्थाल्यां विपच्यमानायां यवादीनां यथैव हि।
सुराणां नारकाणां च तथोर्ध्वाधः प्रवर्तनम्॥ इति॥

अत्राविमुक्ते स्थावराः जङ्गमाश्च सर्वे प्राणिनो मोक्षेऽधिक्रियन्ते,

---

(१) ॐ मित्येकाक्षरं ब्रह्म व्याहरन् ममानुस्मरन्।
यः प्रयाति त्यजन्देहं स याति परमां गतिम्॥ गीता ८।१३॥

(२) बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वदेजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितम्। ( एत० उप० ५।३ )

(३) भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।
बुद्धिमत्सु नराः श्रेष्ठाः नरेषु ब्राह्मणाः स्मृताः॥ मनु० १–९६ )

संकोचे करणाभावात्।

अन्यस्य ब्रह्मसदनं श्रुत्या तात्पर्यवत्तथा।
सर्वस्य बोध्यते जन्तोर्मुक्तिरेकेन जन्मना॥ ९॥
ते ब्रह्मलोकवाक्येन ब्रह्मलोकगता जनाः।
यथा सर्वे विमुच्यन्ते तथैवात्रापि जन्तवः॥ १०॥
तत्र ब्रह्मोपदेष्टा स्यादत्र साक्षान्महेश्वरः।
तस्यापि परमाचार्यो 'यो ब्रह्माणमि'ति श्रुतेः॥ ११॥

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्तः आत्मा तं कथमहं विजानीयामिति? स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति? वरणायां नाश्यां च मध्ये प्रतिष्ठित इति। का वै वरणा का च नाशीति? सर्वान् इन्द्रियकृतान् दोषान् वारयतीति तेन वरणा भवतीति। सर्वान् इन्द्रियकृतान् पापान् नाशयतीति तेन नाशी भवतीति। कतमं चास्य स्थानं भवतीति? भ्रुवोर्घ्राणस्य च यः सन्धिः स एव द्यौर्लोकस्य परस्य च सन्धिर्भवति। एतद्वै सन्धिं सन्ध्यां ब्रह्मविद उपासते इति। सोऽविमुक्त उपास्यः इति सोऽविमुक्तं ज्ञानमाचष्टे। यो वैतदेवं वेदेति। (जा. उ. २)

अथ हैनमत्रिः पप्रच्छ य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहमिमं विजानीयामिति? "सोऽविमुक्ते उपास्यः" इत्युवाच याज्ञवल्क्यः। "सोऽविमुक्तः कस्मिन् प्रतिष्ठितः" इति अत्रिः पप्रच्छ। "वरणायां नश्यां च मध्ये प्रतिष्ठितः" इत्युवाच याज्ञवल्क्यः। वरणायां, नाश्याम् इत्यत्र विभक्तिव्यत्ययेन षष्ठी ज्ञातव्या। "का च वरणा भवति का च नाशी" इति अत्रिः पप्रच्छ। सर्वानिन्द्रियकृतान् दोषान् वारयतीति 'वरणा' भवति, सर्वानिन्द्रियकृतान् पापान् नाशयतीति तेन 'नाशी' इत्युवाच याज्ञवल्क्यः। सर्वान्,इन्द्रियकृतान् इत्युभयत्र सर्वाणि इन्द्रियकृतानि पापानि इति लिङ्गव्यत्ययो बोध्यः। वारयति—निवारय-

तीति वरणा। अस्यति—निरस्यतीति असिः। सर्वानिन्द्रियकृतान् पापान्नाशयतीति नाशीति केचित् पठन्ति। स्पष्टमन्यत्। "कतमश्चास्याः स्थानं भवति" इति अत्रिः पप्रच्छ। "भ्रुवोर्घ्राणस्य यः सन्धिः" इत्युवाच याज्ञवल्क्यः। अत्र घ्राणशब्देन घ्राणवायुप्रचारकं घ्राणमूलमुच्यते।

वाराणसी भ्रुवोर्मध्यमविमुक्तं तयोर्भ्रुवोः।
अध्यात्मं तु त्वदिष्टं तद् भ्रुवोर्घ्राणस्य चान्तरम्॥ १२॥

"भ्रुवोर्मध्ये प्राणमावेश्य"(१) इति भगवद्वाक्यमपि। अविमुक्ते प्राणान् परित्यजतः परब्रह्मप्राप्तिं प्रतिपादयति।

दिवः परस्य लोकस्य सन्धिः सन्ध्येति चोच्यते।
सैव सन्ध्याऽविमुक्ताख्या तत्रेश्वरमुपासते॥ १३॥
सगुणब्रह्मवेत्तारस्तेषां ज्ञानं स ईश्वरः।
आचष्टे चाविमुक्ताख्ये य एतस्यैव सेवकाः॥ १४॥
जीवेश्वरविभागश्च प्रसङ्गात् प्रतिपाद्यते।
प्रकृतस्योपयोगित्वात् शास्त्रदृष्टेन वर्त्मना॥ १५॥

सृष्टेश्च प्राक् सच्चिदानन्दबोधरूपमखण्डमद्वितीयं परं ब्रह्मैकमेव जागर्ति नान्यत् किञ्चिदस्ति। तथा च श्रूयते-१ "आत्मा(२)वा इदमेक एवाग्र आसीत्। नान्यत् किञ्चन मिषत्"इति। २ "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म" इति च। तन्मायया द्वैरूप्यं प्रतिपद्यते। माया च कार्यकारणरूपेण द्विरूपा। कारणोपाध्युपहितं यच्चैतन्यं तत् सर्वज्ञं सर्वशक्ति सर्वेश्वरं जगत्सृष्टिस्थितिप्रलयकारणं भवति।

---

(१) प्रयाणकाले मनसाचलेन भक्त्या युक्तो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्।
(भ० गीता ८।१०)

(२) यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते।

कार्योपाध्युपहितं यच्चैतन्यं तज्जीवसंज्ञमल्पशक्ति संसारि परतन्त्रं च भवति । कार्योपाधिषु जीवशरीरेषु कारणोपाधेरीश्वरस्य कार्येषु कारणानुवृत्तेरधिष्ठातृत्वमुपपद्यते ।

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।।
तयोरन्यः पिप्पलं स्वाद्व-
त्त्यनश्नन्नन्यो ऽभिचाकशीति ॥ इति ।

पर्यायत्वमविद्याया मायायाश्च तथाऽपरे ।
प्रयोगेषु प्रसिद्धत्वात् मन्यन्ते लोकवेदयोः॥ ॥१६॥
शक्तिद्वयमविद्यायाः कल्पयन्ति च ते ततः ।
*स्वाश्रयां मोहिनीं कांचिन्मोहिनीमपरामपि ॥ १७ ॥
तमो मोहो महामोहस्तामिस्रं ह्यन्धसंज्ञितः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥ १८ ॥
ब्रह्मदेवमनुष्येषु पशुषु स्थावरेषु च ।
पञ्चधा या विमुक्तात्मा वर्तते चिदुपाश्रया ॥ १९ ॥
तामविद्यां तथाभूतां भगवान् परमेश्वरः ।
संहरत्युदयेनैव सहस्रांशुस्तमो यथा ॥ २० ॥

"जन्तोरत्र हि प्राणैरुत्क्रममाणस्य रुद्रस्तारकं ब्रह्म व्याचष्टे" इत्यस्यायमर्थः—वाराणसीमध्यवर्तिनां मनुष्यव्यतिरिक्तानां जङ्गमानां स्थावराणां च वाराणसीप्राप्तिस्थितिप्रलय(१)कारणानां पुण्यकर्मणां भूयस्त्वात् प्रारब्धेन शरीरेण क्रियमाणयोः पुण्यपापयोरसम्भवात् प्रारब्धस्य कर्मणो भोगादेव परिक्षयात् प्राणप्रयाणसमये सर्वज्ञः सर्वशक्तिस्सर्वान्तर्यामी परमकारुणिकः परमेश्वरः स्वतः सिद्धमात्मरूपम् अविद्याप्रहाणादभिव्यञ्जयति—अवगमयतीत्यर्थः । तथा च श्रूयते—

---

(१) प्रलयेत्यस्य स्थाने 'फल' इति ख. पु. पाठः ।

यो देवानां प्रथमं पुरस्ता—
द्विश्वाधिको यो रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यति जायमानं
स नो देवः शुभया स्मृत्या संयुनक्तु । इति ।

ईश्वरस्य सर्वशक्तिमत्त्वमपि श्रूयते—

न तस्य कार्यं करणञ्च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया चेति ॥

( श्वेताश्वतर ६–८ )

मनुष्येषु ये जीवन्मुक्तास्तेषां प्राणोत्क्रमणं नास्ति । "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते" (बृहदारण्यक ४. ४. ६.) इति श्रुतेः ॥ ते यत्र क्वापि निवसन्तः प्रारब्धकर्मक्षये विदेहकैवल्यं प्राप्नुवन्ति ।

ये च सगुणब्रह्मोपासकाः, ये च केवलं निरपेक्षाः सन्तः श्रुतिस्मृत्युक्तस्ववर्णाश्रमोचितकर्मानुष्ठातारस्तेषां सर्वेषां चत्वारिंशत्संस्कारैरशेषैरसंस्कृतत्वेपि दयाक्षान्त्यृजुतानसूर्या मङ्गल्यानायासकार्पण्यास्पृहाद्यष्टभिरात्मगुणैर्युक्तानां प्राणप्रयाणसमये पूर्वोक्तन्यायेन भगवान् परमेश्वरस्तारकं ब्रह्मोपदिशति । अन्येषामप्यशेषाणाम् मनुष्याणां गङ्गावगाहनदर्शनाभ्यां यज्ञदानतपोभिश्च यादृच्छिकैः पुराकृतैः कर्मभिः सुकृतैः "ऊषरः पुण्यपापानां धन्या वाराणसी पुरी" "इदं प्रिये क्षेत्रमतीव मे प्रियं संसारजीवोषरमूषराणाम्" इति वचनाभ्यामूषरत्वेन प्रसिद्धक्षेत्रप्रभावेण च नष्टावशिष्टपापकर्मणः काम्यस्यच पुण्यकर्मणः इहैव जन्मनि भोगः "मुक्तिरेकेन जन्मना" इति मुक्तेरवश्यम्भावित्वात् । प्रारब्ध एव शरीरे भोक्तव्यत्वोपपत्तेः "अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" इति वचनात् काश्यां कृतयोः पुण्यपापयोरुत्कटत्वात् वर्तमान एव शरीरे भोक्तव्यत्वनियमाच्चानयोः पुण्यपापयोः फलदानाय—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥"

(भ० गी० १८।६१)

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"

(श्वेता० ४।१०)

इति वचनात् मयावी परमेश्वरः प्राणप्रयाणसमयात् पूर्वक्षणे-नैकेनानेककालीनेष्टानिष्टकर्मफलोपभोगयोग्यशरीरान्तरानुप्रवेशं माययैवोद्भाव्य इष्टानिष्टान् स्वप्नकल्पान् भोगान् अनुभाव्य पश्चात् पूर्वोक्तन्यायेन तारकं ब्रह्मोपदिशतीत्यवश्यमेवाभ्युपगन्तव्यम्।

तथा च सूतसंहितायाम्—

ईदृशी परमा निष्ठा गुरोः साक्षान्निरीक्षणात्।
कर्मसाम्ये त्वनायासात् सिद्धत्येव न संशयः॥

कर्मसाम्ये कर्मणोः सुकृतदुष्कृतयोः फलभोगेन साम्ये सतीत्यर्थः। अन्यथा प्रत्यक्षश्रुतिविरोधात् प्राणैरुत्क्रममाणस्येति वर्तमानार्थे विहितप्रत्ययसामान्यात् "मुक्तिरेकेन जन्मना" इति वचनात् "अत्रैव मृतमात्राणाम्" इति मात्रच्प्रत्ययप्रयोगप्राबल्यात्। "कालेन चातो व्यवधानवन्ति" इति वाराणसीमुक्तेः कालान्तरेण व्यवधानश्रवणात्। श्रुत्यनुगुणानामन्येषामपि वचनानां भूयसां सम्भवात्।

प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि।
वालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः॥ इतिन्यायात्

"पीनो देवदत्तो दिवा न भुङ्क्ते" इति वाक्ये रात्रिभोजनमन्तरेण पीनत्वानुपपत्तेर्यथा रात्रिभोजनं कल्प्यते तथैवात्रापि श्रुतिस्मृत्यन्यथानुपपत्या मुक्तिरेकेन जन्मना जन्तोरेष्टव्या।

जाग्रत्स्वप्नयोः कर्मफलभोगे न कश्चिद्विशेषोऽस्ति—

"तस्य त्रय आवसथास्त्रयः स्वप्नाः" इति श्रुतेः॥

(ऐत० १ अ० ३ खं०)

मायाविमोहितानां क्षणेनैकेन विग्रहान्तरपरिग्रहात् विचित्राश्चानुभवाः श्रूयन्ते उक्तं च वासिष्ठे—

यथा स्वप्ने मुहूर्ते स्यात् संवत्सरशतभ्रमः ।
तथा मायाबलादेव जायते जाग्रति भ्रमः ॥ इति ।

सुप्तो जन्तुः स्वल्पमात्रेऽपि काले,
कोटीः पश्येद् वृत्तसंवत्सराणाम् ।
कोटीः पश्येदेवमागामिनां च
जाग्रत्काले योजयेत् सर्वमेतत्(१) ॥

(संक्षेपशारीरके २—१३०)

शैवागमेऽपि—

कपालमिन्दुः करिचर्म नागाः
काशीपुरीकण्ठगतस्य जन्तोः ।
मूर्च्छासु मूर्च्छासु परिस्फुरन्ति
संज्ञासु संज्ञासु तिरोभवन्ति ॥

काशीखण्डेऽपि—

कृत्वा कर्माण्यनेकानि कल्याणानीतराणि च ।
तानि क्षणात् समुत्क्षिप्य काशीसंस्थोऽमृतो भवेत् ॥
महापापौघशमनीं पुण्योपचयकारिणीम् ।
भुक्तिमुक्तिप्रदामन्ते को न काशीं सुधीः श्रयेत् ॥ इति ।

पुराणेष्वपि स्मर्यते-भगवान्मायाविमोहितः कदाचिन्नारदः कन्यात्वमवाप । तां कश्चिदुदवहत् । तदा पुत्रान् बहूनजनयत् । सांसारिकं च दुःखमनेककालीनमन्वभूत् । भर्तुः पुत्राणां च वियोगजेन शोकेन पुनर्नारद एवासीत् इतिवाराहपुराणे (२) । गङ्गातटे वसन् कश्चिन् मुनिर्मायाविमोहितः

---

(२) इदं पद्यं सुरेश्वराचार्यशिष्यसर्वज्ञमुनिकृतसंक्षेपशारीरकस्थं सुरेश्वराचार्यकृतेऽस्मिन् कथमापतितमिति चिन्त्यम् ।

(२) ख. पु. स्कन्दपुराणे इति पाठः ।

किरातकन्या समभवत्। तस्या पाणिं किरातः कश्चिद्ग्रहीत्। सा च पुत्रान् बहूनसूत. पौत्रांश्चापश्यत् सा कदाचिदुदकाहरणाय गङ्गातीरमसीत। किरातजातिस्याभावाद्वासः कुम्भं च तीरे निधाय गङ्गान्तप्राथः प्राविशत। प्रविष्टमात्रा क्षणेनैकेन स एव मुनिरभवत्। विलम्बितां तामालक्ष्य तद्भर्तृपुत्रसम्बन्धिबान्धवाः तद्देशमागत्य वासः कुम्भं च तदीयं तीरे दृष्ट्वा गङ्गाप्रवाहेण सा नीतेति निश्चित्य महान्तं विलापं चक्रुः ततस्तेन मुनिना 'साऽहमस्मि' इति प्रबोधिताः प्रकृतिस्था नाभवन्। अथ विज्ञानैर्बहुभिः प्रबोध्यमानाः यथागतं सत्यमित्थमेवैतदिति शोकं परित्यज्यागच्छन्" इतिस्कन्दपुराणे(१)। तथा लवणाख्यो राजा कश्चित् मन्त्रिसामन्तनृपतिभूयस्यां सभायां सिंहासनस्थो मायाविना केनापि विमोहितस्तदीयमाया दर्शितमश्वरत्नमधिरुह्य समस्तां पृथ्वीं बभ्राम। अथ जविना तेन पातितः कस्मिंश्चिद्विजनेऽशयिष्ट। क्षुत्तृड्भ्यां परीतश्चारण्ये व्यापारं किञ्चित् कुर्वतः पितुः कृते पानीयमन्नं चादाय गच्छन्तीं चाण्डालकन्यकामेकामपश्यत्। तदन्तिकमुपसृत्याब्रवीत्। "क्षुत्पिपासार्दितस्य मे स्तोकमन्नं पानीयं च देहि" इति। सा च तमुवाच "त्वं चेन्मम भर्ता भविष्यसि तर्हि दास्यामि" इति। 'तथा' इत्यभ्युपगम्य अन्नैकदेशमन्नमभक्षयत् पानीयं चापिबत्। ततः सा तं पितुरन्तिकं नीत्वा वृत्तान्तमावेद्य तेनानुज्ञाता भाविना भर्त्रा साकं स्वभवनमयासीत्। मातृभ्रातृभगिनीनां चैनमदर्शयत् ते च ताश्चैनमभ्यनन्दन्। [स च तामुद्वाहविधिना पर्यग्रहीत्। तया सह चिरकालमुवास तस्यां पुत्रान् बहूनुदपादयत॥](२)

अथ पुनः कालेन गच्छता दुर्भिक्षोपहतस्तस्माद्देशान् तया भार्यया ताभिश्च प्रजाभिः सार्द्धं देशान्तरमयासीत्। स कदाचिन्निर्जले प्रदेशे कस्मिंश्चिद् वृक्षमूले क्षुत्पिपासार्दिताभिः प्रजाभिः भार्यया च सार्द्धं परिश्रान्तोऽशयिष्ट। 'तात! अन्नं पानीयं च देहि" इति क्षुत्पि-

(१) ख. पु. वराहपुराणे इति पाठः।

(२) [ ] रेखान्तर्गतः पाठः पुस्तकान्तरे नास्ति।

पासार्दितैः शिशुभिः प्रार्थ्यमानस्तेभ्यस्तदानीं तद्दातुमुपायं कंचिदलभमानस्तेषामार्तिपरवशं वचः सोढुमशक्नुवन् बलादेधांस्याहृत्य सन्निपात्य प्रज्वाल्य "पक्वं शरीरमेते भक्षयन्तु" इति बुद्ध्या ज्वालाजटिलमग्निं प्रविशत्। ततः क्षणात् उन्मील्य अक्षिणी विस्मयाविष्टः राजा क्षणेनैकेन तद् वृत्तं मन्त्रिसामन्तप्रभृतिभ्यः कथयामास—इति कथा वासिष्ठरामायणे। एवंजातीयकाः सन्त्यन्याश्चानेकशः कथाः। एवमुक्तप्रकारेण काश्यामपि केषाञ्चित् स्मर्यमाणः शरीरान्तरप्रवेशः कालभैरवयातनाद्यनुभवश्च मायामय एवेत्यभ्युगन्तव्यम्। अयमर्थः सनत्कुमारसंहितायां स्पष्टः—

अत्रैव पापैः सह चेन्मृतोऽसौ न जन्ममृत्यू लभते त्ववश्यम्।
कालेन मे पापगणैः फलेषु नियोजितस्तच्च फलं प्रभुज्य॥
अल्पेन कालेन समस्तमेव सार्द्धं पुरा रुद्रपिशाचरूपैः।
भवप्रसादेन (१) कृतोपदेशः पिशाचयोनेरपि मुक्तिमेति॥

"यथात्र पुण्यं कृतम् अक्षयं स्यात्तथात्र पापं न तयोर्विशेषः" इति तु स्तुतिनिन्दार्थवादः। अन्यथा सर्वेषां मनुष्याणां पुण्यपापयोरल्पयोर्वा संभवात् तयोश्चाक्षयत्वाङ्गीकारे न कस्यापि मुक्तिः स्यात्तत्र मुक्तिप्रतिपादकयोः श्रुतिस्मृत्योर्वैयर्थ्यं स्यात्। अतो हेतोः कश्यां कंचित् कालमुषित्वा बहिर्गत्वा ये म्रियन्ते तद्विषयमेव तदित्यवगन्तव्यम्। "वाराणस्यां कृतं पापं वज्रलेपो भविष्यति" इत्यपि वचनं तथैव मन्तव्यम्। "पापकर्ता कश्चित् काश्यां म्रियते पुण्यकर्मा बहिर्म्रियते" इति नैवं विज्ञानवद्भिः विचारणीयम्। एकस्मिन्नेव जन्मनि पुण्यपापयोः परिच्छेत्तारो वयम्, अनादौ संसारे मनोवाक्कायैः कृतयोः पुण्यपापयोः परिच्छेत्ता महेश्वरः।

तथा च ब्रह्मवैवर्ते स्कन्देनोक्तं मगस्त्यं प्रति—

न ज्ञायते सूक्ष्मतरं हि किञ्चित्

(१) ख. पु. तवप्रसादेनेतिपाठः।

कर्मास्ति लोकस्य सुदुर्विभाव्यम् ।

योगादियज्ञादितपोभिरुग्रै—
र्युक्तस्य ते सम्प्रति नास्ति काशी ।

न ज्ञायते कस्य किमस्ति पुण्यं
स्वल्पोपि काश्यां तनुभृत् सदास्ते ।

देवादयोऽपि प्रभवन्ति नैव
स्थातुं क्षणं काशिकायां किमन्ये ।

इति कृतप्रयत्नापेक्षस्तारकं ब्रह्म उपदिशति इत्यवगन्तव्यम् । अन्तर्बहिः करोतीति च प्रतिनियतैव वस्तुशक्तिः । यथाग्नेः दाहकशक्तिस्तथा काश्यां मोचकशक्तिः प्रतिनियतैव ।

यथा शुक्तौ पयोवाहात् पतिता जलबिन्दवः ।
मुक्ताः स्युश्च तथा काश्यां संस्थिताः सर्वजन्तवः । (२१)

कीटाः पतङ्गा मशकाश्च वृक्षाः
जले स्थले ये विचरन्ति जीवाः ।

मण्डूकमत्स्याः कृमयोऽपि काश्यां
त्यक्त्वा शरीरं शिवमाप्नुवन्ति ॥

पुण्यानि पापान्यखिलान्यशेषं
सार्धं सबीजं सशरीरमार्ये ।
इहैव संहृत्य ददामि बोधं
यतः शिवानन्दमवाप्नुवन्ति ॥

सूच्यग्रमात्रमपि नास्ति ममास्पदेऽस्मिन्,
स्थानं सुरेश्वरि मृतस्य न यत्र मोक्षः ।
भूमौ जले वियति वाशुचिमेध्यतो वा,
सर्पाग्निदस्युपविभिर्निहतस्य जन्तोः ।

स्थिरा काश्यामिहैवैका प्रतिज्ञा हि मया कृता ।
अत्रैव मृतमात्रेण तिरश्चामपि देहिनाम् ॥
भक्तानामप्यभक्तानां पुण्यपापात्मनामपि ।
मुक्तिं दास्यामि सर्वेषां भक्तानामेव सा बहिः ॥

विनापि योगैः सहितोऽपि भोगैः
विनापि पुण्यैः सहितोऽपि पापैः ।
मृतः प्रयात्येव हि यत्र तत्र
मामेव निर्दग्धसमस्तदोषः ॥

अत्र साक्षात् महादेवो देहान्ते स्वयमीश्वरः ।
व्याचष्टे तारकं ब्रह्म जन्तूनामपवर्गदः ॥ २२ ॥

सनत्कुमारसंहितायाम्—

महात्मनां शान्ततपोधनानां
शापो मुनीनामपि यत्र भग्नः ।
तत्क्षेत्रमासाद्य महानिधानं
वणिग् जनोऽप्यत्र वसन् कृतार्थः ॥
योगोऽत्र निद्रा क्रतवः प्रचाराः,
स्वेच्छाशनं देवि महानिवेद्यम् ॥
लीलात्मनो देवि ! पवित्रदानं,
जपः प्रलापः शयनं प्रणामः ॥

मोक्षं सुदुर्लभं मत्वा संसारं चातिभीषणम् ।
अश्मना चरणौ हत्वा वाराणस्यां वसेन्नरः ॥
इदं कलियुगं घोरं सम्प्राप्तं पाण्डुनन्दन !
गतिमन्यां न पश्यामि मुक्त्वा वाराणसीं पुरीम् ॥
जपध्यानविहीनानां ज्ञानविज्ञानवर्जिनाम् ।
व्रतस्वाध्यायहीनानां गतिर्वाराणसी नृणाम् ॥

अस्यत्यसिर्वारयति प्रवेशे
कर्माणि जन्तोर्वरणा वरेण्या ।

वाराणसी मध्यगता तयोश्च
निश्शेषयत्यूषरताप्रभावात् ॥
अनिदमुदयमाद्यं धाम वामार्द्धकान्तं,
स्वमहिमरसिकं यत् स्वानुभूत्यैकमानम् ।
अनवरतमपास्तद्वैतमात्मावबोधं.
प्रकटयति पशूनां कालपाकेन काश्याम् ॥

जन्मान्तरसहस्रेषु मोक्षो लभ्येत वा न वा ।
काश्यां तु लभ्यते जन्तोर्मुक्तिरेकेन जन्मना ॥
गर्भाधानाद्यखिलमपि यत् कर्मजातं द्विजाना—
मेकं न्यूनं मुनिमपि मुने ! पातयिष्यत्यवश्यम् ॥
नो चेत् स्वर्गादिषु फलमदः सर्वशास्त्रेप्रसिद्धम् ।
तस्मात् काश्यां कथमपि वसेद् बुद्धिमान् मुक्तिसिद्ध्यै ॥
काशि ! श्रीमति ! सर्वकर्मशमनि स्वाभाविकी काचन
प्रत्यक्षं तव शक्तिरस्ति महती मातर्महीमण्डले ॥
यत् सर्वत्र सदा वसन्नपि शिवस्त्वय्येव लब्ध्वास्पदं
विश्वं तारयते विशेषविमुखः पारं भवाम्भोनिधेः ॥

आब्रह्मणोऽनन्तभवेषु पुण्यं
मुक्त्वावशिष्टार्जितमल्पमल्पम् ।
तत्तद्वशाद् यद्यविमुक्तमेकं—
कदाचिदायाति मम प्रसादात् ॥
तीर्थानि सर्वाण्यपि मोक्षदानि
श्रुतानि शास्त्रेष्वखिलेषु राजन् ।
वाराणसीप्राप्तिफलानि शीघ्रं
कालेन चातो व्यवधानवन्ति ॥

यत्राचार्यस्त्रिपुरविजयी साधनानां चतुर्णां
संपद्दासः सुलभमशनं स्वैरचारस्तपांसि ।

श्रोतव्यस्य श्रुतिरपि तपः श्रूयते जन्मभाजां
काले काश्यां सुकृतधनिकास्तत्र वासं लभन्ते ॥
जन्मान्तरसहस्रेषु सञ्चितैः पुण्यकर्मभिः (१) ।
प्राप्य (२) वाराणसी रम्यां प्रसादात् पारमेश्वरात् ॥
ये काश्यां संशयाविष्टा मुक्तौ तेषां शरीरिणाम् ।
प्राणप्रयाणसमये प्रमाणं परमेश्वरः ॥
येन केनापि यः कश्चित् निमित्तेन परित्यजेत् ।
काश्यां प्राणान् सर्वजन्तुर्मुक्त इत्यवगम्यताम् ॥ २३ ॥
मोक्षस्य निर्णयः काश्यामित्थमेकेन जन्मना ।
सर्वेषामेव जन्तूनां प्रमाणैः प्रतिपादितः ॥ २४ ॥

विश्वेश्वरो जयति विश्वविमुक्तिहेतोः
काशीनिवासरसिकः करुणासमुद्रः ।
तत्पादपद्मयुगसौरभवासितस्य
जन्तोर्भवत्यविकृतं शिवसामरस्यम् ॥ २५ ॥

इति श्रीमत्परमहंसपारिव्राजकाचार्य सुरेश्वराचार्यविरचितः
सकलश्रुतिस्मृतिपुराणवाक्यनिर्धारितः
काशीमृतिमोक्षविचारः समाप्तः ।

इति शम्

श्रीविश्वनाथो विजयतेतराम् ।

---

(१) 'कोटिजन्मभिः' इति क. पु. पाठः ।

(२) 'प्राप्ता' इति क. पु पाठः ।

# THE PRINCESS OF WALES SARASWATI BHAVANA TEXTS.

Edited by
GOPINATH KAVIRAJ, M. A.

No. 1—The Kiranavali Bhaskara, (किरणावलीभास्कर) [वैशेषिक], a Commentary on Udayana's Kiranavali, Dravya section, by Padmanabha Misra. Ed. with introduction and Index by Gopinath Kaviraj, M. A. Rs. 1—12

No. 2—The Advaita Chintamani, (अद्वैतचिन्तामणि) [वेदान्त], by Rangoji Bhatta, Ed. with Introduction etc. by Narayana Sastri Khiste Sahityacharya. Rs. 1--12

No. 3—The Vedanta Kalpalatika, (वेदान्तकल्पलतिका) [वेदान्त], by Madhusudana Saraswati. Edited with Introduction etc. by Ramajna Pandeya Vyakaranacharya. Rs. 1—12

No. 4—The Kusumanjali Bodhani, (कुसुमाञ्जलिबोधनी) [न्याय], a commentary on Udayana's Theistic Tract, Nyaya Kusumanjali, by Varadaraja. Ed. with introduction etc. by Gopinath Kaviraj, M. A. Rs. 2—0

No. 5—The Rasasara (रससार) [वैशेषिक], a commentary on Udayana's Kiranavali, Guna Section, by Bhatta Vadindra. Ed. with Introduction etc. by Gopinath Kaviraj, M. A. Rs. 1—2

No. 6—(Part I)-The Bhavana Viveka (भावनाविवेक) [मीमांसा], by Mandana Misra, with a Commentary by Bhatta Umbeka. Ed. with Introduction etc. by M. M. Ganganatha Jha, M. A., D. Litt. Rs. 0—12

No. 6—(Part II)-Ditto Ditto Rs. 0—12

No. 7—(Part I)-The Yoginihirdaya dipika (योगिनीहृदयदीपिका) [तन्त्र], by Amritananda Nath, being a commentary on Yoginihridaya, a part of Vamakesvara Tantra. Ed. with Introduction etc. by Gopinath Kaviraj, M. A. Rs. 1—8

No. 7—(Part II)-Ditto Ditto Rs. 1—4

No. 8—The Kavyadakini (काव्यडाकिनी) [काव्यशास्त्र], by Gangananda Kavindra. Ed. with Introduction etc. by Jagannatha Sastri Hoshing Sahityopadhyaya. Rs. 0—10

No. 9—(Part I)-The Bhakti Chandrika (भक्तिचन्द्रिका) [भक्ति], a commentary on Sandilyas Bhaktisutras, by Narayana Tirtha. Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs. 0—15

No. 10-(Part I)-The Siddhantaratna, (सिद्धान्तरत्न) [गौडीयवैष्णवदर्शन], by Baladeva Vidyabhusana. Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs. 1—2

No. 10-(Part II)—Do. Do. Rs. 2—12

No. 1.-The Sri Vidya Ratna Sutras, (श्रीविद्यारत्नसूत्र) [तन्त्र], by Gaudapada, with a Commentary by Sankararanya, Ed. with Introduction etc. by Narayana Sastri Khiste, Sahityacharya. Rs. 0—9

No. 12-The Rasapradipa, (रसप्रदीप) [अलङ्कार], by Prabhakara Bhatta. Ed. with Introduction etc. by Narayana Sastri Khiste Sahityacharya. Rs. 1—2

No. 13-The Siddhasiddhanta Sangraha, (सिद्धसिद्धान्तसंग्रह) [नाथमार्ग], by Balabhadra.

Ed. with Introduction by Gopinath Kaviraj, M. A. Rs. 0—14

No. 14–The Trivenika. by (त्रिवेणिका) [अलङ्कार], by Asadhara Bhatta.
Ed. with Introduction by Batukanatha Sarma Sahityopadhyaya, M.A. and Jagannatha Sastri Hoshing Sahityopadhyaya. Rs. 0—14

No. 15–(Part I)–The Tripurarahasya, (Jnana Khanda) (त्रिपुरारहस्य, ज्ञानखण्ड) [तान्त्रिकदर्शन],
Ed. with a Prefatory Note by Gopinath Khviraj, M. A. Rs. 0--14

No. 15–(Part II)-Do. Do. Rs. 2—4

No. 15–(Part III)–Do. Do. Rs. 2—0

No. 15-(Part IV)-Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16–The Kavya Vilasa, (काव्यविलास) [अलङ्कार], by Chiranjiva Bhattacharya.
Ed. with Introduction etc. by Batukanatha Sarma Sahityopadhyaya M. A. and Jagannatha Sastri Hoshing Sahityopadhyaya. Rs. 1—2

No. 17–The Nyaya Kalika, (न्यायकलिका) [न्याय], by Bhatta Jayanta.
Ed. with Introduction by M. M. Ganganatha Jha. M. A. D. Litt. Rs. 0—14

No. 18–(Part I)–The Goraksa Siddhanta Sangraha, (गोरक्षसिद्धान्तसंग्रह) [नाथमार्ग],
Ed. with a Prefatory Note by Gopinath Kaviraj M. A., Rs. 0—14

No. 19–(Part I)–The Prakrita Prakasa (प्राकृतप्रकाश) [प्राकृतव्याकरण], by Vararuchi with the Prakrita Sanjivani by Vasantaraja and the Subodhini by Sadananda.
Ed. with Prefatory note etc. by

Batuk Nath Sarma, M. A. and Baladeva Upadhyaya M. A. Rs. 2—4

No. 19—(Part II) Ditto Ditto Rs. 2—12

No. 19—(Part III) Introduction etc. (In Preparation.)

No. 20—The Mansatattvaviveka ( मांसतत्त्वविवेक ) [धर्मशास्त्र], by Visvanatha Nyayapanchanana Bhattacharya,.
Edited with Introduction etc. by Pandit Jagannatha Sastri Hoshing Sahityopadhyaya, with a Foreword by Pandit Gopi Nath Kaviraja, M. A., Principal, Government Sanskrit Cellege, Benares. Rs. 0— 12

No. 21—(Part I) The Nyaya Siddhanta Mala (न्यायसिद्धान्तमाला) [न्याय], by Jayarama Nyaya Panchanan Bhattacharya.
Edited with Introduction etc. by Dr. Mangal Deva Sastri, M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1—4

No. 21—(Part II) Ditto Ditto Rs. 2—0

No. 22—The Dharmanubandhi Slokachaturdasi ( धर्मानुबन्धिश्लोकचतुर्दशी) [धर्मशास्त्र,] by Sri Sesa Krisna with a Commentary by Rama Pandit.
Edited with Introduction ete. by Narayana Sastri Khiste Sahityacharya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1—0

No. 23—The Navaratrapradipa (नवरात्रप्रदीप) [धर्मशास्त्र], by Nanda Pandit Dharmadhikari.
Ed. with Introduction etc. by Vaijanatha Sastri Varakale, Dharmasastra-Sastri, Sadho-

lal Research Scholar, Sanskrit College, Benares, with a Foreword by Pandit Gopi Nath Kaviraj, M. A. Principal, Government Sanskrit College, Benares. Rs. 2—0

No. 24-The Sri Ramatapiniyopanisad (रामतापिनीयोपनिषद्) [उपनिषद्], with the commentary called Rama Kasika in purvatapini and Anandanidhi in Uttaratapini by Anandavana.

Ed. with Introduction etc. by Anantarama Sastri Vetala Sahityopadhyaya, Post-Acharya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopi Nath Kaviraj, M. A. Principal, Government Sanskrit College, Benares. Rs. 3—12

No. 25-The Sapindyakalpalatika (सापिण्ड्यकल्पलतिका) [धर्मशास्त्र], by Sadasivadeva alias Apadeva with a commentary by Narayana Deva.

Edited with introduction etc. by Jagannatha Sastri Hosinga, Sahityopadhyaya, Sadholal Research Scholar, Govt. Sanskrit College, Benares. Rs. 1—4

No. 26-The Mrigankalekha Natika (मृगाङ्कलेखानाटिका) [नाटिका], by Visvanatha Deva Kavi.
Edited with Introduction etc. by Narayana Sastri Khiste Sahityacharya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1—0

No. 27-The Vidvachcharita Panchakam (विद्वच्चरितपञ्चकम्) [निबन्ध], By Narayana Sastri Khiste Sahityacharya, Assistant Librarian, Govt. Sanskrit College, Sarasvati Bhavan a Library, Benares With an Introduction by Gopinath

Kaviraj, M. A., Principal Govt. Sanskrit College, Benares. Rs. 2—0

No. 28-The Vrata Kosa (व्रतकोश) [धर्मशास्त्र], by Jagannatha Sastri Hosinga Sahityopadhyaya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by Sri Gopinath Kaviraj, M. A., Principal, Govt. Sanskrit College, Benares. Rs. 4—0

No. 29-The Vritti dipika (वृत्तिदीपिका) [व्याकरण], By Mauni Sri Krisna Bhatta.
Edited with Introduction etc. by Pt. Gangadhara Sastri Bharadvaja, Professor, Govt. Sanskrit College, Benares. Rs. 1—2.

No. 30-The Padartha Mandanam (पदार्थमण्डन) [वैशेषिक] By Sri Venidatta.
Edited with Introduction ect. by Pandit Gopala Sastri Nene Professor Govt. Sanskrit College, Benares. Rs. 0—14

No. 31 (Part I)-The Tantratna (तन्त्ररत्न) [मीमांसा], by Partha Sarathi Misra.
Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt. Vice Chancellor, Allahabad University Allahabad. Rs. 1—14

No. 31 (Purt II)- Ditto. Ditto.
Edited by Pt. Gopal Sastri Nene, Govt. Sanskrit College, Benares.

No. 32-The Tattvasara (तत्त्वसार) [न्याय], by Rakhaldasa Nyayaratna.
Edited with Introduction etc. by Harihara Sastri, Benares Hindu University. Rs. 1—0

No. 33-(Part I)-The Nyaya Kaustubha (न्यायकौस्तुभ) [न्याय], by Mahadeva Puntamkara
Edited with Introduction etc. by

Umesa Misra, M. A., Allahabad University, Allahabad. Rs. 3--4

No. 34-(Part I)-The Advaita Vidyatilakam (अद्वैतविद्यातिलकम्) [शाङ्करवेदान्त], by Sri Samarapungava Diksita.
With a Commentary by Sri Dharmayya Diksita,
Edited with Introduction etc. by Ganapati Lal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares. Rs. 1—4

No. 35-The Dharma Vijaya Nataka (धर्मविजयनाटक) [नाटक], by Bhudeva Sukla.
Edited with Introduction etc. by Pandit Narayana Sastri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares. Rs. 1—4

No. 36-The Ananda Kanda Champu (आनन्दकन्दचम्पू) [चम्पू], by Mitra Misra.
Edited, with a Foreword by Gopinath Kaviraj, M. A., by Nanda Kishore Sahityacharya, Research Scholar, Sanskrit College, Benares. Rs 3—4

No. 37-The Upanidana Sutra (उपनिदानसूत्रम्) [वेद],
Edited with Introduction by Dr. Mangaldeva Sastri M. A. D. Phil. Rs. 1—0

No. 38-The Kiranavali prakasa didhiti (Guna), (किरणावलीप्रकाशदीधिति) [वैशेषिक], by Raghunath Siromani.
Edited by Pandit Badrinath Sastri, M. A., Lucknow University. Rs. 1—12

No. 39-The Rama Vijaya Mahakavya (रामविजयमहाकाव्य) [काव्य], by Rupanatha.
Edited by Pt. Ganapatilal Jha, M.A. Rs. 2—0

No. 40-(Part I)-The Kalatattva Vivechana (कालतत्त्व-विवेचन) [ धर्मशास्त्र ] by Raghunath Bhatta.
Edited, with a Foreword by Gopinath Kaviraj, M. A., by Nanda Kishore Sarma Sahityacharya, Research Scholar, Sanskrit College, Benares. Rs. 4—0

No. 40-(Part II)-Do. Do.

No. 41-(Part I)-The Siddhanta Sarvabhauma (सिद्धान्त-सार्वभौम) [ज्यौतिष], by Sri Munisvara.
Edited with Introduction etc. by Jyautisacharya Pandit Murlidhar Thakkura, late Sadholal Scholar, Sanskrit College, Benares Rs. 3—0

No. 42-The Bheda Siddhi (भेदसिद्धि) [न्याय], by Visvanath Panchanana Bhattacharya.
Edited with notes etc. by Nyaya Vyakaranacharya Pandit Surya Narayana Sukla, Professor Govt. Sanskrit College, Benares.

No. 43-(Part I)-The Smartollasa (स्मार्तोल्लास) [कर्मकाण्ड] by Siva Prasada.
Edited with Introduction, notes etc. by Vedacharya Pandit Bhagavat Prasad Misra, Professor, Govt. Sanskrit College, Benares.

No. 44-(Part I)-Sudrachara Siromani (शूद्राचारशिरोमणि) [धर्मशास्त्र],
Edited by Sahityacharya Pandit Narayana Sastri Khiste.

No. 45-(Part I)-Kiranavali Prakasa (Guna) (किरणावली प्रकाश) (गुण) [वैशेषिक], by Vardhamana.

Edited, with a Foreword by Pandit Gopinath Kaviraj, M. A., by Pandit Badrinath Sastri M. A. Lucknow University. Rs. 1—8

No. 45-(Part II)-Do. Do.

No. 46-(Part I)-Kavya prakasa dipika (काव्यप्रकाशदीपिका) [अलङ्कार] by Sri Chandi Dass. Edited by Sri Sivaprasada Bhattacharya, M. A., Professor Presidency College, Calcutta. Rs. 1—12

No. 47-Bhedajayasri (भेदजयश्री) [माध्ववेदान्त], by Sri Tarkavagisa Bhatta Venidattacharya Edited with Introduction etc., by Pandit Tribhuvan prasad Upadhyaya, M A., Inspector of Sanskrit Pathshalas, United Provinces, Benares. Rs. 1—4

No. 48-Samyak Sambuddha bhasitam Buddhapratimalaksanam (सम्यक्संबुद्धभाषितं प्रतिमालक्षणम्) [शिल्पशास्त्रम्], With the Commentary Sambuddhabhasitapratima-laksana Vivarani. Critically edited with Introduction etc. by Haridas Mitra, M.A. Visvabharati, Santiniketana. Rs. 1—4

No. 49-Bhedaratna (भेदरत्न) [न्याय] by Sankara Misra, Edited with Introduction etc., by Pandit Suryanarayana Sukla, Professor, Govt. Sanskrit College, Benares. Rs. 1—8

No. 50-Matrika Chakra Viveka (मातृकाचक्रविवेक) [तन्त्र], by Svatantrananda Natha, with a Commentary. Edited by Pandit Lalita Prasad Dabral Vyakaranacharya. With a Foreword by Pt. Gopinath Kaviraj, M. A., Principal Govt. Sanskrit College, Benares. Rs. 2—0

No. 51-52. Advaita Siddhanta Vidyotana (अद्वैतसिद्धान्त-विद्योतन) [वेदान्त], by Brahmananda Sarasvati
and
Nrisimha Vijnapana (नृसिंहविज्ञापन) [वेदान्त], by Nrisimhasrama.
Edited with notes, Introduction etc. by Pandit Surya Narayana Sukla, Professor, Govt. Sanskrit College, Benares.

No. 53-Nrisimha Prasada-Vyavaharasara (नृसिंहप्रसाद-व्यवहारसार) [धर्मशास्त्र], by Dalapati Raja.
Edited with Introduction etc. by Pandit Vinayaka Sastri Tillu, Research Scholar, Sanskrit College, Benares.

No. 54-Nrisimha Prasada-Prayaschitta Sara (नृसिंह-प्रसाद-प्रायश्चित्तसार) [धर्मशास्त्र], by Sri Dalapati Raja.
Edited by Pandit Nanda Kishora Sharma and Nanda Kumar Sharma Sahityacharya.

No. 55-Nrisimha Prasada-Sraddha Sara (नृसिंहप्रसाद श्राद्धसार) [धर्मशास्त्र],
Edited by Pandit Vidyadhara Misra, College of Oriental Learning, Benares Hindu University, Benares.

No. 56-Bhagavannama Mahatmya Samgraha (भगवन्नाम-माहात्म्यसंग्रह) [भक्तिशास्त्र], by Raghunathendra Yati, with Com. by Ananta Sastri Phadke.
Edited by Pt Ananta Sastri Phadke.

No. 57-(Part I)-Ganita Kaumudi (गणित कौमुदी) [गणित] by Narayana Pandit.
Edited by Pt. Padmakara Dvivedi, Professor, Govt. Sanskrit College, Benares.

No. 58-Khyativada (ख्यातिवाद) [वेदान्त] by Sankara Chaitanya Bharati.

Edited by Sankara Chaitanya Bharati, with Foreword by M. Gopinath Kaviraj M. A.

No. 59-Sankhya Tattvaloka (सांख्यतत्त्वालोक) [सांख्य], by Hariharananda Aranya.
Edited with Introduction by Jajneswar Ghosh M. A.,
With a Foreword by M. Pt. Gopinath Kaviraj, M. A.

No. 60-(Part I) Sandilya Samhita (शाण्डिल्यसंहिता) [पाञ्चरात्र]
Edited by Pt. Ananta Gopal Phadke Professor, Govt. Sanskrit College, Benares.

No. 62-Nrisinha Prasada Tirtha Sara (नृसिंह प्रसादः तीर्थसारः) [धर्मशास्त्र].
Edited by Pt. Surya Narayan Sukla.

No. 63-Bhaktyadhikarana mala (भक्त्यधिकरणमाला) [भक्तिशास्त्र] by Narayana Tirtha.
Edited by Pt. Anant Gopal Phadke.

No. 64-Vasistha Darsana (वासिष्ठदर्शनम्) [वेदान्त],
Compiled by Dr. B. L. Atreya.
Edited by Dr B L. Atreya, M.A., Ph. D., Lecturer Benares Hindu University.

No. 65-67-(a) Tirthendusekhara (तीर्थेन्दुशेखरः) [धर्मशास्त्र] by Nagisa.
(b) Tristhali Setu (त्रिस्थलीसेतुः) [धर्मशास्त्र] by Bhattoji Diksita.
(c) Kasimoksavichara (काशीमोक्षविचारः) [वेदान्त] by Sureswara Acharya.
Edited with Introduction by Pt. Suryanarayan Sukla, Prof. Govt. Sanskrit College, Benares.

No. 68-Madhvamukhalankara (मध्वमुखालङ्कारः) [मध्ववेदान्त] by Vamamali Misra.

Edited with Introduction by Pt. Narasinha Varakhedker.
With a Foreword by M. Pandit Gopinath Kaviraj M. A.

WORKS IN THE PRESS.

No. 1—Daksinamurti Samhita (दक्षिणामूर्तिसंहिता) [तन्त्र], Edited by Pt. Narayana Sastri Khiste.

No. 2—Asvalayana Srauta Sutra with Sidhhanti Bhasya (सिद्धान्तिभाष्यसहित आश्वलायनश्रौतसूत्र) [वेद], Edited by Dr. M. D. Sastri, M. A., D. Phil.

No. 3—Niti manjari (नीतिमञ्जरी) [वेद], by Dya Dvivedi. Edited by Dr. Mangaldeva Sastri, M. A., D. Phil.

No. 4—(Part II)-Nyaya Kaustubha-Anumanakhanda (न्यायकौस्तुभअनुमानखण्ड) [न्याय], by Mahadeva Puntamkar.
Edited by Pt. Goswami Damodara Sastri.

No. 5—Mimansa Chandrika (मीमांसाचन्द्रिका) [मीमांसा], by Brahmananda Sarasvati.
Edited by Pt. Haran Chandra Bhattacharya Sastri.

No. 6—(Part III)-Tantraratna (तन्त्ररत्न) [मीमांसा], by Partha Sarathi.
Edited by Pt. Gopal Sastri Nene.

No. 7—(Part II)-Kavya prakasa dipika (काव्यप्रकाशदीपिका) [अलङ्कार], by Sri Chandidass.
Edited by Pt. Sivaprasada Bhattacharya, M. A.

No. 8-(Part III)-Kalatattvavivechana (कालतत्त्वविवेचन) [धर्मशास्त्र], by Raghunatha Bhatta.
Edited by Pt. Nanda Kishore Sharma.

No. 9-(Part III)-Siddhanta Sarvabhauma (सिद्धान्तसा-

वंभौम) [ज्यौतिष], by Munisvara.
Edited by Pt. Murlidhar Thakkur.

No. 10-Upendra Vijnana Sutra (उपेन्द्रविज्ञानसूत्र) [दर्शन], Edited by Dr. M. D. Shastri.

No. 11-Nyayamrita Saurabha (न्यायामृतसौरभ) [माध्व-वेदान्त], by Vanamali.
Edited by Pt. Nrisimha Acharya.

No. 12-Isvara pratyabhijna karikas of Utpala with the Vimarsini of Abhinava Gupta and Com. on Vimarsini by Bhaskara Kantha.
Edited by K. Subrahmanya Iyer, M. A., and K. C. Pandey, M. A., Ph. D.